संस्कृत-भारती-विज्ञापनम्।

# संस्कृत भारती

सं १ आंगल-भाषा परिशिष्ट-समेता।

निखिलभारतीया त्रैमासिकी पत्रिका

(साहित्य-पुराण-दर्शन-विज्ञानात्मिका)

साम्प्रदायिक-राजनीति-धर्मनीति—विरहिता—

अष्टमवर्षं समारब्धम्।

संस्कृतभारत्याः सम्पादकाः।

(१) महामहोपाध्याय श्रीयुक्तलक्ष्मणशास्त्री द्राविडः,

(२) श्रीयुक्त रमेशचन्द्रविद्याभूषणकाव्याकरणसांख्यवेदान्ततीर्थः,

(३) श्रीयुक्त उमाचरणवन्द्योपाध्यायशास्त्री एम् ए,

आंगलपरिशिष्टस्य सम्पादकसङ्घः।

(१) श्रीयुक्त उमाचरण वन्द्योपाध्यायः एम् ए।

## मूल्यम् अग्रिमदेयम्।

पत्रिकाप्रेषणव्ययसमेतम्।

| | त्रैमासिकम् | वार्षिकम् | वार्षिकम् इउरोपप्रमुखविदेशेषु |
|---|---|---|---|
| परिशिष्टसमेतायाः संस्कृतभारत्याः | १।/॥ | ५।/ | ७) |
| संस्कृतभारत्याः | ॥/ | ३॥ | ५) |
| आंगलपरिशिष्टस्य | ।/॥ | १॥/ | २/ |

संस्करणत्रयं पृथक् मुद्रितम्।

## विशेषतो द्रष्टव्यम्—

अध्यापकैः स्वव्ययेन भृतासु संस्कृतपाठशालासु द्वादश अधिका वा उपाधिपरीक्षार्थिनः पाठकाः सन्ति चेत्, तर्हि मूल्यम् विनैव पत्रिका प्रेष्यते।
उच्च-आंगल संस्कृत-पाठशालानान्तु विद्यार्थिनां कृते अर्द्धमूल्यम् निर्द्धारितम्।
साहित्यपुराणदर्शनविज्ञानाद्यात्मिकाः संस्कृत-आंगल-हिन्दि वङ्गभाषादिनिबद्धा
अन्याः पत्रिकादयश्च समालोचनार्थं गृह्यन्ते विनियमेन दीयन्ते च।
संस्कृतभारत्यां प्रकाशितानां प्रबन्धानां आंगलपरिशिष्टे, विपरीतरीत्या
अनुवादो न प्रकाश्यते।

वङ्ग-मद्र-विहार-उत्कल-युक्तप्रदेश-आसाम-मध्यप्रदेश-विदर्भ-
वरदा-काश्मीराख्य-जनपदानां महात्मभिः शासकसङ्घैः
कृपयाऽनुमोदिता कृतसाहाय्यका वा ।

मुम्बई-पञ्चाम्बु हयदरावाद भवनगर इन्दोर-जनपदानां महात्मभिः
राजकीयशिक्षाधिकारिभिः कृपयाऽनुमोदिता च ।

कलिकाता-मुम्बई महीशूर-वाराणसी ढाका-हयदरावाद—पञ्चाम्बु-मद्र-विश्ववि-
द्यावेश्माधिकारिभिः महात्मभिः कृपया गृहीता च ।

## विज्ञापनमूल्यं स्वल्पम् ।

(क) संस्कृतग्रन्थकृतां प्रथमविज्ञापनम् अतिसंक्षिप्तं चेत् मूल्यं विनैव प्रकाशयिष्यते ।

(ख) प्रतिपङ्क्ति (१म-२य वारे) मूल्यम् आनकद्वयम् । (पश्चात्) सार्द्ध आनकैक-
मात्रम् । एकपृष्ठम्—(अशीतिपङ्क्तिपरिमित) (१म २य वारे) ७॥ राजत-
मुद्राः । (पश्चात्) ६॥ राजतमुद्राः ।

अर्द्धपृष्ठम्—(१म-२य-वारे) ४) राजतमुद्राः (पश्चात्) ३॥ राजतमुद्राः ।
"कालेजाख्येषु" उच्च-आगलेषु, अपरेषु विद्यालयेषु, चतुष्पाठीषु, पुस्तकालयेषु
अन्यत्र च व्यवहारार्थम् ।

संस्कृतमिति परीक्षा-ग्रन्थादीनां शास्त्रोक्तभेषजानां विषयान्तराणाञ्च विज्ञप्ति-
प्रचारार्थम् ।

संस्कृतभारती कार्य्यगृहम्, वङ्गदेशस्य वर्द्धमाननगरतः । } श्रीप्रफुल्लचरणवन्द्योपाध्यायः बि-ए, कार्य्याध्यक्षः ।

## विज्ञप्तिः ।

संस्कृतभारतीपत्रिकाग्राहकाणां संग्रहणाय कलिकाता-ढाका-सिलं-पाट्ना-
पुरी-वाराणसी आलहाबाद लक्ष्णौ-लाहौर-नागपुर पुना बोम्बे-माद्राज दिल्ली-
नामधेयनगरेषु श्रमशीला आगलसंस्कृतविद केचन चरित्रवन्तो युवानोऽपेक्ष्यन्ते ।
प्रशंसापत्राणामनुलिपिभिः सह वर्द्धमाननगरे कर्म्माध्यक्षसकाशमावेदनपत्रं प्रेष-
णीयम् । भृतिनिर्द्देशस्तु आवेदकैरेव करणीयः ।

## मुद्रणस्थानम्—वाराणसीधाम कलिकाता नगरी च

प्रचारकः—श्रीयुक्त प्रबोधचन्द्र सेनः एम्-ए,

प्रबन्धेषु व्यक्तानां मतानां भावानां च गुणदोषभागित्वं यथास्वं
प्रबन्धकृतामेव, न तु पत्रिकासम्पादकानाम् ।

पत्रिकां ग्रहीतुकामाः स्व स्व नाम, वासस्थान, 'डाक'गृह, मण्डलं, प्रदेशञ्च
विस्पष्टैः अक्षरैः लिखेयुरिति । पूर्व्वखण्डे—अलब्धे उत्तरखण्डं लभ्यते चेत् तत्
त्वरया कर्म्माध्यक्षसकाशं वक्तव्यम् ।

## संस्कृतकामधेनुः ।

तिलकश्रीपिका कापि पिकालापा सुपत्त्रिका ।
"कलिकेत्" नगरादेषाऽऽषाढे ह्यवातरत् ॥ १ ॥
याऽऽख्यायते 'संस्कृत कामधेनु' याऽन्विष्यते देशविदेश-विज्ञैः ।
याऽऽपूर्यते सूक्तिसुधाप्रबन्धैः सा दिव्यवाणी हृदयं धिनोतु ॥ २ ॥
वेदशास्त्र पुराणादि काव्यपीयूष वर्षिणी ।
गैर्वाणी सेव्यतां वाणी सर्वभाषाधिकारिणी ॥ ३ ॥
अस्यास्तु रूप्यद्वितयं हि मूल्यम् तच्चाऽग्रिम वार्षिकमेव देयम् ।
पत्राधिपायेति निवेद्यतेऽद्य गीर्वाण-वाणी-रसकोविदेभ्यः ॥ ४ ॥
मान्यै संस्कृत-भारत्या ग्राहकै र्महितात्मभिः ।
धन्यैरन्यैश्च मान्येयं संस्कृता कामधेनुका ॥ ५ ॥

'मद्र' जनपदान्तर्गत कलिकेत्नगरात् ।

पण्डितप्रवर श्रीयुक्त कृष्णविहारि-तर्कसिद्धान्तस्य विशदप्राञ्जलटीकया-लङ्कृतानि च ।

## क्रय्याणि पुस्तकानि ।

१ । पिङ्गलछन्द सूत्रम्—मूल्यमेकरूप्यकम् १) प्रेषणादिव्यय आणकद्वयम् ⁄
२ । भाषा परिच्छेद " " " " "
३ । मालतीमाधव नाम प्रकरणम्—मूल्य सपादैकरूप्यकम् १।) उत्तरार्द्ध मूल्यम् तथा । प्रेषणादिव्यय आणकद्वयम् ⁄)
४ । साङ्ख्यसूत्रम्—मूल्यम् रूप्यकद्वयम् २) प्रेषणादिव्यय आणकत्रयम् ⁄)

## प्राप्तिस्थानम्—सं भारती कार्य्यालयः ।

---

## विक्रेयपुस्तकानि ।

अभिनवानि काव्यानि सुललितभाषाविचित्रभावपूरितानि ;
विद्वद्वर्य्यैः सुष्ठु प्रशंसितानि ।

(१) परशुरामचरितम् मूल्यम् अर्द्धरूप्यकम्
(२) हैहयविजयम् " "
(३) रुक्मिणीहरणम् " "
(४) सुभद्राहरणम् " "
(५) सत्यभामापरिग्रहम् " रूप्यैकपाद
(६) पाण्डवविजयम् " रूप्यैकमात्रम्

एम, ए, कविभूषणोपाधिना अध्यापकेन श्रीइश चन्द्ररायेण विरचितम्
प्राप्तिस्थान—संस्कृतभारती कार्य्यालयः ।

---

# भलाखिटियास युनियन उच्च अंग्रेजी विद्यालय।
## पारितोषिक अर्थ-भण्डार।

( गण्डालराज्य कर्तृक अनुमोदित ) धोराजी काठियावाड
सन् १९२५ सालको १२ अप्रेल को उक्त भण्डार निश्चय खुले गा।

सर्व सहित २०००००) रुपया अदायमे से ८०१००) रुपया पारितोषिक स्वरूपमे वितरण किया जावे गा। प्रत्येक पारितोषिक खंडमे १) रुपया मूल्यको ५ कुपन रहें गो।

किसी प्रकार भेद न करके सम्पूर्ण जातीय रूपमें परिचालित ( धोराजी भलाखिटियास युनियन उच्च अंग्रेजी विद्यालयके ) स्वेच्छासेवकों के लिये युनियन उच्च अंग्रेजी विद्यालय के उपकारार्थ गण्डालराज्य कर्तृक यह पारितोषिक अर्थ भंडार अनुमोदित हुआ हैं।

इस जिला के ४९ प्रसिद्ध मनुष्यों द्वारा गठित कमिटी के तत्त्वावधान में यह अर्थ भंडार का काम सम्पूर्ण होता है। इस विद्यालय का साधारण कोर्स ( पाठ्यपुस्तक-तालिका ) व्यतीत हिसाब निकास, आफिसके खातापत्र रखने की प्रणाली, सूत निर्माणवो वस्त्र वयन एव कुस्ती गीरो की शिक्षा भी छात्रोंको दिजाती है। केवल छात्रोंके एव स्थानीय हिन्दु-मुसलमान युवकों के व्यायाम करने के लिये एक अखाडा प्रस्तुत किया गया हैं। शिशुछात्रों के पढने के लिये एक किंडारगार्टेन विद्यालय भी सम्प्रति खोला गया हैं।

उल्लिखित कारण स्वदेशानुरागी दयार्द्रहृदय भद्रमनुष्यो के निकट सहायता पाने का अधिकार इस विद्यालय को मिला है, एव आशा की जाती है कि वह लोक विशेष उत्साह के साथ इस विद्यालय को सहायता करें गे। अर्थ सहायताकारीगण सुनने से आनन्दित होंगे कि सानुचर मौलाना शौकत अली सम्प्रति इस उच्च अंग्रेजी विद्यालय का परिदर्शन किया है, एव शिक्षकवो छात्रोंका उत्साह देख कर विशेष सन्तोष प्रकाश किया था।

यदि और भी विवरण सुनने की इच्छा होतो हमारे लोगों की पारितोषिक कापोंके पश्चात भाग को देखिये या, अंग्रेजी मे अवैतनिक सम्पादकगणके निकट पत्र लिखिये।

अवैतनिक सम्पादकगण—
भलाखिटियास युनियन उच्च अंग्रेजी विद्यालय
धारोजो काठियावाड, भारतवर्ष।

# A

## SAMSKRITA BHARATI ADVERTISER, for 1925.

*N. B.* Kindly circulate after perusal.

## SAMKHYA SARA A 11.

( A well-known treatise on Samkhya Philosophy with a new Sanskrit commentary. Highly applauded by Scholars. )

By Professor R. C. Kabya-Vyakaran-Samkhya-Vedanta-Tirtha, Burdwan, Bengal.

(Reprinted from S. Bharati)

pp 154 Royal Octavo Price Re 1/-6 ( inclusive of postage )

 Apply to Manager, S. Bharati.

## KALIDAS RESEARCH SOCIETY A 12

## AN APPEAL TO THE EDUCATED INDIANS

WANTED A KALIDAS MEMORIAL

37, Amherst Street, Calcutta.

The Samskrita Bharati,—Organ of the Society.

We want Kalidas Memorial Hall and Library where all the manuscripts and printed editions of Kalidas's works published in any part of the world, in any language, as well as pictures, inscriptions, figure-plates, coins and all sorts of articles of interest in the study of Kalidas's literature, will be collected. About one lac of rupees is required for the project. Funds will be accepted on behalf of the Committee and will be kept in the Imperial Bank of India.

Pundit Manmatha Bhattacharyya, Kabibhusan, Kabyatirtha,

64 1, Bowbazar Street, Calcutta.

## "JAYADEVA CHARITAM." A 13.

(A New Sanskrita Drama)

Reprinted from S. Bharati.

By Pandit Niradendu Sanyal Kabya-Vyakaran-tirtha.

Based upon the life and character of Jayadeva Goswami, author of the Gita-govindam. Composed in very plain, attractive and elegant Sanskrit on a new plan. Highly applauded by learned pandits.

Price Re 1/8/- (Postage extra)

TO BE HAD OF

C

## A GOLDEN OPPORTUNITY

**Coming Shortly !** **Coming Shortly !!**

# BHAGAVATH GITOPANYASA DARPANAM.

A simple and lucid commentary on Bhagavath Gita

A book without a rival  The only work of its kind

A rare unique commentary on Bhagavath Gita according to Dwaita, Adwait and Visistadwaita philosophies, very useful for self study and for Geetha lecturer Printed in Superior glazed paper, in Royal octavo size, with a photo of the Pandi in sanskrit Devanagari characters

Vichitra Sathavadhani, Vidwanmani, Mahabhagavatha, Mathathraya, Bhaga-vath Geethopanyasa Vidwan, Pandit T Lakshmanachariar of Gita fame an published by his grandson, T N Raghuthamachariar

In three Volumes :—

| | | | | |
|---|---|---|---|---|
| Vol I Chapters 1 to 6 now ready | Rs | 5 | 0 | 0 |
| Vol. II Chapters 7 to 12 will be ready in June 1925 | Rs | 2 | 0 | 0 |
| Vol III Chapters 13 to 18 Now ready | Rs | 3 | 0 | 0 |
| Total | Rs | 10 | 0 | 0 |

Postage etc **Extra.**

Concessions will be given to those who register their names within **June, 192** and all the books will be supplied for Rs 8 only

Apply to Manager, Bhagavad Gitopanyasa Darpan office,

Tiruvadi, Tanjore District, Southern India.

# (স্বেচ্ছাসেবকদিগের) ইউনিয়ন উচ্চ ইংরাজী বিদ্যালয় A 17

## পারিতোষিক অর্থ ভাণ্ডার

## ( গণ্ডালরাজ্য কর্ত্তৃক অনুমোদিত )

# ১৯২৫ সালের ১২ই এপ্রিল তারিখে উক্ত ভাণ্ডার নিশ্চয়ই খোলা হইবে।

সর্ব্বসমেত আদায়ি ২০০০০০ টাকা হইতে ৮০০১০ টাকা পারিতোষিক স্বরূপে বিতরিত হইবে। প্রত্যেক পারিতোষিক খণ্ড ... পাঁচটী কুপন থাকিবে।

সম্পূর্ণ জাতীয় ভাবে পরিচালিত মোরবী ( স্বেচ্ছাসেবকদিগের ইউনিয়ন উচ্চ ইংরাজী বিদ্যালয়ের ) উপকারার্থ গণ্ডাল রাজ্য কর্তৃক এই পারিতোষিক অর্থ ভাণ্ডার জাতিবর্ণনির্বিশেষে অনুমোদিত হইয়াছে। এই জেলার ৫৭ জন প্রসিদ্ধ ব্যক্তির দ্বারা গঠিত কমিটির তত্বাবধানে এই অর্থভাণ্ডারের কার্য্য সম্পন্ন হয়। এই বিদ্যালয়ে সাধারণ নির্দ্ধারিত পাঠ্য পুস্তক শিক্ষা ব্যতীত ভারতীয় হিসাব নিকাশ, আপিসের খাতাপত্র রাখিবার প্রণালী, সূত্রনির্ম্মাণ ও বস্ত্রবয়ন, এবং কুস্তিগিরিও ছাত্রদিগকে শিক্ষা দেওয়া হয়। ছাত্রদিগের এবং স্থানীয় হিন্দু ও মুসলমান যবকদিগের ব্যায়াম করিবার জন্যই একটী আখড়া প্রস্তুত করা হইয়াছে।

শিশুছাত্রদিগের পড়িবার কারণ একটী কিণ্ডারগার্টেন বিদ্যালয়ও সম্প্রতি খোলা হইয়াছে। উল্লিখিত কারণে স্বদেশানুরাগী, দয়ার্দ্র হৃদয় ভদ্রলোকদিগের সাহায্য পাইবার এই বিদ্যালয়ের অধিকার জন্মিয়াছে এবং আশা করা যায় যে তাঁহারা বিশেষ উৎসাহের সহিত এই বিদ্যালয়ের সহায়তা করিবেন। অর্থসাহায্যকারীগণ শুনিলে সুখী হইবেন যে সম্প্রতি মোলানা সাউকত আলি সম্প্রতি এই উচ্চ ইংরাজী বিদ্যালয় পরিদর্শন করিয়াছেন এবং শিক্ষক ও ছাত্রদিগের উৎসাহ দেখিয়া বিশেষ সন্তোষ প্রকাশ করিয়াছিলেন।

আরও বিশেষ বিবরণ জানিতে ইচ্ছা করিলে আমাদের পারিতোষিক কার্ডের পশ্চাৎ ভাগ দেখুন অথবা ইংরাজীতে পত্র লিখুন।

অবৈতনিক সম্পাদকগণ,
ভলান্টিয়ার্স ইউনিয়ন উচ্চ ইংরাজী বিদ্যালয়।
মোরবী, কাথিওয়ার, ভারতবর্ষ।

# দেবপ্রতিষ্ঠাতত্ত্বম্ A 18

মহামহোপাধ্যায়স্মার্ত্তপ্রবর শ্রীরঘুনন্দন ভট্টাচার্য্য কর্ত্তৃক সংগৃহীতম্

**মূল ও বিশদবঙ্গানুবাদ সমেত, পাঠার্থীদের বিশেষ উপযোগী।**

পণ্ডিত প্রবর শ্রীযুক্ত রামেন্দু নাথ স্মৃতিতীর্থ কর্ত্তৃক সংস্কৃত।

প্রাপ্তিস্থান—কার্য্যাধ্যক্ষ, সংস্কৃত ভারতী কার্য্যালয়।

# संस्कृतभारती।

भागः ६. Vol VI | May-August 1924 | संख्या २. No. 2.


## गुरुशिष्यसंवादशतकम्।


श्रीयुक्तहेरम्बनाथकाव्यव्याकरणसांख्यतीर्थशास्त्रिणः।



६ष्ठवर्षीय १म खण्डस्य २४ पृष्ठतोऽनुवृत्तम्।


गुरुः,—परापकारका नित्य परहिंसापरायणाः।
विस्रब्धे मानवे ये वा तथा जने हितैषिणि॥
आचरन्ति सदा पापं निष्पापे मनुजेऽपि च।
भूमेर्भारा मनुष्यास्ते कथ्यन्ते तथ्यवादिभिः॥

शिष्यः,—के नराः श्वपचाधमाः? (३६)

गुरुः,—हरिभक्तिविहीना ये मानवा मनुजर्षभाः।
विद्याविनयसम्पन्ना नानाशास्त्रविशारदाः॥
गुणेषु गुणिना श्रेष्ठा ज्ञानेषु ज्ञानिना वराः।
मनुष्येषु न गण्याः स्युः श्वपचादधमाः स्मृताः॥

शिष्यः,—के नराः कुक्कुराधमाः? (३७)

गुरुः,—अधमाः कुक्कुराः सत्य जन्मना न च कर्म्मणा।
नित्य पशुषु गण्यन्ते ततोऽधमाः प्रकीर्त्तिताः॥
अकृतज्ञाः कृतघ्नाश्च कुक्कुरा न कदाचन।
प्रभोराज्ञावहा नित्त सर्वे सर्वत्र सर्वदा॥
श्रूयन्ते ते प्रभोरर्थे यदि प्राणात्ययो भवेत्।
त्यजन्ति न कदा कार्य्यं साधयन्ति ह्यमायया॥
दृश्यन्ते बहवो हन्त नरा ह्यस्मिन् धरातले।
अकृतज्ञाः कृतघ्ना ये ते नराः कुक्कुराधमाः॥

शिष्यः,—जगति के नरा न शोभन्ते? (३८)

गुरुः,—न शोभन्ते नराः के वा नार्य्यश्च जगतीतले।
न शोभन्ते यथा दीपा उदिते रविमण्डले॥
विहीना विद्यया लोका नानारत्नविभूषिताः।
न शोभन्ते यथा दीपा उदिते रविमण्डले॥
धर्म्मेण वर्ज्जिता ये वा नरा ज्ञानसमन्विताः।
न शोभन्ते यथा दीपा उदिते रविमण्डले॥
पतिभक्तिविहीना याः सर्वालङ्कारभूषिताः।
निपुणाः सर्वकार्य्येषु उर्वशीव वराननाः॥
नानासुगुणसम्पन्नाः दयादाक्षिण्यसयुताः।
न शोभन्ते यथा दीपा उदिते रविमण्डले॥

शिष्यः,—के नराः सदा निर्भया भवन्ति? (३९)

गुरुः,—विपद्व्याप्ताञ्च मन्यन्ते पृथ्वीं धीरा निरन्तरम्।
दारापत्य गृहं द्रव्यं सर्वं हि क्षणभङ्गुरम्॥
मरीचिकेव सर्वञ्च प्रलोभदायकं वृथा।
न किञ्चिद्विद्यते सारो जगतः स्वामिना विना॥
न कश्चिद्विद्यते बन्धु र्ऋते सर्वजनाश्रयम्।
आश्रयन्ते सदा ये वा कायेन मनसा गिरा॥
पदं तस्य जगत्स्रष्टुः सर्वविघ्नविनाशनम्।
न भयं विद्यते तेषां ते नरा निर्भयाः सदा॥

---

## समस्यापूर्त्तयः

### श्रीयुक्तललिताङ्गकाव्यतीर्थस्य।

१। परमकुशलपूर्णौ प्रीतिभाक् चारुशोभ
प्रचुरसुखविधायिन् दर्शनैकान्तचित्त।
वदनसदृशभावावेशमाप्तां नु धत्तः
प्रति शरदमयेते पद्मचन्द्रावभिख्याम्॥

२ । मत्स्यस्य पुच्छलिखनं विजयप्रदं स्यात्
सौभाग्यदं भवति सद्यवचिह्नमेव ।
फाले हलं तदुभयं खलु दृश्यते वा
यस्याः शत करतले यदि धान्यराशिः ॥

३ । यूनीकुचावपि विलोक्य सकामभावः
चक्षुः प्रभूतमुददाय क्षताद्वि मत्वा ।
तत्रैव चिह्नमवमृष्य हृदावकल्प्यान्
लक्ष्मीं विलोक्य विदधे नु दशावतारान् ॥

४ । वृद्धस्य वामदिशि सद्युवतीं विलोक्य
स्वर्वैद्यकौ भृशमवाप्तु रार्त्तिमाहो ।
कन्यां नृपस्य रुचिरा मनसा तदानीं
सद्भूयते कमलमम्भसि पल्वलस्य ॥

५ । चैतन्य विषयादपेतमनसङ्गेहात् प्रयाणोद्यतं
वैराग्यप्रकटप्रयासकुशलं दृष्ट्वा तदीया प्रसूः ।
गाढं क्रन्दति नाम तस्य दयिता वारो मृताभा तदा
गौरं मुग्धवधूकपोलसुहृदा केनापि धाम्ना नभः ॥

---

## ॥ देवता-हृदयज्ञता ॥

### पण्डितश्रीयुत के० ए० रामलिङ्गशास्त्रिणः ।

केषाम् ? श्रीमदप्पय्यदीक्षितेन्द्राणाम्, कुतः ? उदाह्रियते,—न वयम् अधुना अमीषा दीक्षितवर्याणां पवित्रं चरित्रं निर्दिदिक्षामः, किं तर्हि ? स्वारस्यावह किमपि ऐतिह्यम्, किं तत् ? शृणुत ।

सर्वतन्त्रस्वतन्त्रा अमी खलु दीक्षितेन्द्राः देवतानुभूतिशालिन इति को वा जनो न जानाति ? सर्वशास्त्रकाव्यस्तोत्ररूपाणां शताधिकाना सर्वोपयुक्तानां सच्चर्चाचन्दनचर्चितानां प्रबन्धाना प्रबन्धारः किल एते नैकविधै राजाधिराजैः आसेतुहिमाचलनिलयैः बहुमानितां अमितां प्रख्यातिम् उपलेभिरे इति प्रकाशः, तत्र, कस्मिंश्चित् तावत् समये तञ्जा-पुरी-( Tanjore City ) भूपालैः सम्मा-

निताः, तद्वत्यान् अवगच्छन्, एतद्भावितनल्लजश्चद्रूणः श्री-तातार्य इति प्रथितः कश्चिद् विपश्चिद्वर्योऽपि राजपण्डितो बभूव, कदाचिद् नृपतिः स्वभूमण्डलस्थानि क्षेत्राणि निरीक्षितुम् आभ्यां विद्वद्भ्याम्, समुचितेन परिच्छदेन च साकं प्रतस्थे । कस्मिंश्चिद् हरि-हर पुत्र-देवतायतने स्वीयपरिवारसमेत धर्मशास्तुर्बिम्बं कमनीयं महनीयशीलो भूपालः समीक्ष्य भक्तिरसवशः—दक्षिणाशयस्य तर्जनीं चिबुके निक्षिप्य, देवदेवस्य अवस्थिते निदानं कौतुकम् ? इति ग्रामीणान् विदुषश्च पप्रच्छ । ग्रामवासिनस्तावद् इत्थं प्रतिजगदुः—अस्मत्पूर्वपुरुषाणां भाषया कर्णाकर्णिकया श्रुतम्—यत् कश्चिद् विपश्चिदत्र यदाऽभ्येत्य एतन्निदानं निरूपयिष्यति, तदा भगवान् तर्जनीम् उद्धरिष्यति इति ।

तदा किल श्री-तातार्यवर्यः कथयाञ्चकार—

विष्णोः सुतोऽहं, विधिना समोऽहं, धन्यस्ततोऽहं सुरसेवितोऽहम् ।
तथापि भूतेशसुतोऽहमेतै भूतैर्वृतश्चिन्तयतीह शास्ता ॥ १ ॥

पुरा खलु सुरासुराणां सुधानिमित्तं मिथो विरोधे प्रवृत्ते, तन्निवर्हणाय मोहिनी-रूपिणः शार्ङ्गिणः ( हरेः ), हरस्य च समागमेन भुवनाभ्युदयाय फाल्गुन्याम् उत्तरफल्गुनीसहितायाम् अवतीर्णः पूर्णा-पुष्कलाम्बा-सहितः पाण्ड्यदेशे केरलदेशे च किं बहुना ! भारतवर्षे सर्वत्र च भक्तायतनैराराधितो लीला अत्यद्भुता अपरिमिताः कलयामासेति इदमुपाख्यानं—श्रीललितोपाख्याने सङ्क्षेपतो निरूपितम् उपलभ्यते । अतः भगवान् एव मन्यते—विष्णोः अहं सुतः, अतः ब्रह्मणोऽपि जन्मकारणनाभीपुटवत्त्वात नारायणस्य, तत्सुतेन विधिना अहं समः; ततः अहं धन्यः=ब्रह्मसाम्योपलब्ध्या स्वस्य कृतार्थता; किं च, ब्रह्मा यथा सुरैः सेवितः=पूजितः, तथा अहमपि देवैः अर्चित एव यद्यपि, तथापि, श्मशानम् अधिवसतां भूतानाम् ईशस्य सन्ध्यानटस्य सर्वभूताधिपतेस्तनयोऽहम्, इति एतैः भूतैः परिवृतः सन् शास्ता चिन्तयति इह इत्यर्थः ॥*

पद्यमिदं शुश्रुवांसः सर्वेऽपि अनिमिषा एव भगवन्तं विलोकयन्त आसन्—अधुना शास्ता शयम् उद्धरिष्यति इति सकुतूहलम् । न तदा देवो हस्तम् उच्चिक्षेप । अनन्तरं श्रीमदप्पय्यदीक्षिताः कथयामासुः—

अम्बेति गौरीमहमाह्वयामि पत्न्यः पितुर्मातर एव सर्वाः ।

---

* ( नात्र शास्तृ-पदेन बुद्धदेवो विवक्षित इति मन्तव्यम् )

कथं नु लक्ष्मीम्? इति चिन्तयन्त शास्तारमीडे सकलार्थसिद्धे ॥ १ ॥
हरि-हर-पुत्र एवं मन्यते—

मद्रुद्रवकारणस्य भवस्य पत्नीं भवानीम् अहम अम्ब । इति आहूयामि आहूयिष्यामि, यतः विश्वा जठाः सर्वा अपि स्त्रियः जनन्य एव, शास्त्रन्यायानुसारतः—सवीयतनयस्य । कथं नु लक्ष्मीम्=लक्ष्म्यादेवीं विष्णोः पत्नीं कया विधया अहम् आहूयेयम्? इति चिन्तयन्त शास्तारं सर्वाभीप्सित सद्धे ईडे=स्तुवे इत्यर्थः ॥ तदात्व एव वन्दितपादो देवः पाणि विधुताद् उच्चिक्षेप; विनोदाविष्टहृदयाः सर्वे समभवन्; आनन्दबाष्पविसरावृतनेत्राश्चाभूवन्, किङ्कर्तव्यतामूढाश्चेते श्रीयुताप्पय्यदीक्षित चरणाना देवता-हृदयज्ञता शश्लाघिरे मुक्तकण्ठम्, प्रणेमुश्च चरणारविन्दयोः । श्रीमद्धरिहरपुत्रेण हरिप्रिया कया रीत्या आकरणीया? इति प्रियपाठकमहाशया विवेचयन्तु इति सादरकुतूहलमभ्यर्थयामहे, दीक्षितवरेण्यानां, धर्मशास्तुश्च चरित्रानुभावादिकमन्यदा प्रकटीचिकीर्षाम.; ऐतिह्यम् इद वृद्धमुखात् श्रुतं सरसं प्रियवाचकवर्येभ्यः साभिवादन समर्पयामः इति शम् ॥

---

## *भासमधिकृत्य किमपि

### महोपाध्याय-टि० वि० श्रीनिवासशास्त्री

लोकेऽस्मिन् अविनश्वरा कीर्त्तिः, न पर सद्गुणैर्भिः परन्तु सद्ग्रैरेव सुधाधेति यदुक्त केरलकालिदासेन श्रीमता सि०ए० सि विरुदाङ्कितेन केरलवर्मभूपेन तन्मन्ये न मात्रयापि अयथार्थम् । भारतीया हि कालिदास-भास-भारवि-प्रभृतयः महाकवयः, अथापि भारतीयसाहित्यकाराणा तेषा महाकवीना कविता अन्तरा तान् प्रति न किञ्चिदप्यस्ति नो गाढ. परिचयः । यद्यस्ति, सोऽय परिचयः प्रकाम परिमितः समयाधीनश्च । स्वेषा भारतभूमातुश्च भाविसन्तानानां अभ्युदयोपाय पर प्राधान्येन परिगणय्योज्झित्वा च स्वार्थता स्वजीवित नीतवतां तेषां महानुभावाना चरित्र यथाकथमप्यन्विष्य लोकसमक्ष अवतारयितव्यमेवेत्ययं विषयः सुसम्मत एवेति मन्ये । अद्य यावत् सम्मतेषु महाकविषु कनिष्ठिकाधिष्ठानमर्हत् श्रीकालिदासमहाकविः, बाल्ये निरक्षरकुक्षिः कश्चनाजपाल उष्ट्रपालो वासीदिति । भासमहाकविः केवलमेको रजक आसीदिति च जागर्त्ति किमप्येति-

---

* मलयालमनोरमातः

ह्यम्। तदिदं ऐतिह्यं वास्तविक उत अवास्तविक इति विवेक्तुमपि पर्याप्ता रेखाऽपि न सुलभैव। एतेषां महाकवीनां नात्यधिका एव कविता अद्यतनभारतीयानां सन्ति करगताश्च। ता बहुशो महम्मदीयाक्रमणघट्टे छिन्नोच्छिन्ना: सम्पन्ना; एतादृशास्तु कविता: कछिन्ना अनुच्छिन्नाश्च असत्योऽवशेषिता:, ज्ञानप्रसारविमुख-भारतीया: कतिचित् गुप्तगृहे निक्षिप्य नष्टिकाभक्ष्यं वितानयन्ति च।

कालिदासीयं ऐतिह्यं मात्रया किमपि विपुलं इति वक्तव्यम्। भासाधिकृतं ऐतिह्यं तु नास्त्येव। हेतुश्चात्र भास: कालिदासात् प्राचीन इति स्याचाम। यस्य कस्यापि चरित्रलेखन न पूर्वेषां सर्वसाधारणी पद्धतिरासीत्। कतिचित् साहित्यचरित्रकारा: अवास्तवप्रमेयान् अधिकृत्य चरित्रग्रन्थान् व्यलिखन्। तत्र तेषां उद्देश:, न वस्तुनो यथार्थबहि:प्रकटनं परन्तु स्वमतिष्ठाप्रचारणमेव। एतादृशेषु प्रथम: प्रथितश्च लेखक: बल्लालकविरेव कालिदासो भासो भारविरित्येत एव परं न। सर्वेऽपि भारतीया महाकवय: समानकालिका: अथच भोजराजसदस्याश्चासन् इति हि बल्लालस्याकूतम्, तच्च दृढयितुं सोऽयं लेखक:, तेषां महाकवीनां कानिचित् पद्यानि समस्यापूरणानि च क्रोडीकृत्य तद्घटकतया सम्भाषणञ्च स्वीकृत्य सरसं ग्रन्थमेकं व्यतनोत्‌ 'नलोदय' नाम यमककाव्यं कालिदासकृतिरिति साधयितुं सचतुरं ऐतिहासिकोऽप्ययं एव। तस्य काव्यस्य कर्ता कालिदासो नैव इति भिज्ञा वदन्ति, परन्तु तस्य कर्ता क इति नाद्यावधि निर्ज्ञातो विषय:, एवं अविश्वास्यकविचरित्रलेखनेन साहित्यलोके बहुमुखा: प्रमादा: सम्पद्येरन्। शाकुन्तलम्—मालविकाग्निमित्र—विक्रमोर्वशीय इत्येतानि रूपकाणि, रघुवंश:—कुमारसम्भव:—मेघसन्देश:—इत्येतानि काव्यानि, यस्सरसो रचयामास, सोऽयं कालिदासएव शब्दालङ्कारप्रधानं नलोदयकाव्यमपि प्रणिनायेति सिद्धान्त: नैव प्राज्ञसम्मत: स्यात्।

मासकिं वर्षद्वयात पूर्वं, कुक्कुटक्रोडाभिजनो वृद्ध: कश्चित् साहित्यरसिको मम सुहृत्तमो जात:। एष परेतस्य कुक्कुटक्रोडाधीशस्य भरणाधिकरणे समर्थएक: कर्मकर आसीत्; इदानीन्तु वयोऽधिक: सोऽयं स्वगृहे विश्रमसुखमनुभवति। तस्मात् भासमहाकविमधिकृत्य किमप्यैतिह्यं यहीतु कदापि भाग्यात् ममावसरो लब्ध:, तच्च युक्तियुक्तं श्रद्धेयमिति मे प्रतिभाति। सहृदयानामवबोधाय तदैतिह्यं अधस्तात् संगृह्यते—

१९१३—तमे खिष्टीयाब्दे नीलेश्वराभिजनाः केचन केरलीयविप्राः कुक्कुट-क्रोडं गत्वा तदधीश्वरं 'साभूतिरि' राजकीयग्रन्थालयस्थेषु ग्रन्थेषु मतसम्बन्धिनः कतिचन ग्रन्थान् निरीक्षितुं सदयमनुमतिं अपेक्षत । आगतास्सर्वेऽपि ते विप्राः विद्वांसो धनिनः कुलीनाः प्रबला विशिष्य राजमित्राणि चासन् । अतः सामूतिरिः ग्रन्थान् निरीक्षितुं तेभ्यो निरन्तरायं अनुमतिं ददौ । विप्रास्तु ईप्सितैः ग्रन्थैः सहान्यानपि चतुरो ग्रन्थान् करलोनान् अकार्षुः । एतच्च ते साभूतिरिं नैव ग्राहयामासुः; सामूतिरिश्च तान् नैव समशेत । यद्यपि ग्रन्थालयाध्यक्षो'विप्रतस्क-रत्वं' न न विज्ञातवान्, तथापि स धनदासो विप्रमोषणं गूढमेव गोपयामास । मुष्टेषु ग्रन्थेषु एकं प्रतिमानाटकम्; अपरे च 'दौत्यं' इत्यभिधाने द्वे काव्ये 'स्तुतिशतक' इति एकं मूकाम्बिकास्तवग्रन्थश्च । पितरौ सोदरश्च स्वां चेदिपालाय शिशुपालाय दातुं कृतमत्य इति विषादाकुला रुक्मिणी श्रीकृष्णस्य सकाशे कमपि विप्रं सन्देशवाहिनं कृत्वा प्रहिणोति—इदं वृत्तमेव दौत्ये विवृतम् । इदं च काव्यं एकादशसर्गोपेतं प्रायेणाष्टशतपद्यैः सङ्कुलितञ्चास्ति इति ज्ञायते 'लङ्कादहन'गतं इतिवृत्तन्तु प्रसिद्धं रामायणस्थितमेव । अस्मिन् मुष्टग्रन्थचतुष्टये 'प्रतिमानाटक'मेव अद्ययावत् बहिर्भूतम् । भासमधिकृत्योच्चावचा विषया 'लङ्का-दहनात्' ग्राह्याः सन्तीति श्रूयते ।

पुरा कोलभूपालानां राजधानी कुन्दापुरमासीत् । मूकाम्बिकायाचिकाणां कुन्दा-पुरं नाम सुपरिचितो विषयः । भूपालवंशीयेषु केचित् आयोधनपरिशीलनाय प्रयोगाभ्यसनाय च कुन्दापुरमध्यूषुः, तेषां दैशिकः तदानीं एक एवासीत् । एतस्य नाम सुस्पष्टं न ज्ञातम् । एष दैशिकः आयोधनागारस्य कोष्ठ एकस्मिन्नेव सकुटुम्बं वसन्नवर्तत । एतस्य द्वितीया सुन्दरी युवती चासीत्, नामधेयं त्वस्या वासन्तीति । कालक्रमेण तु एषा योषा राजवंशीय एकस्मिन् तरुणे समासक्ताऽभवत् । दैशिक इमं वृत्तान्तं झटिति जग्राह । तस्य चैष उदन्तो न मनागपि सन्तर्पक आसी-दिति न विशिष्य वक्तव्यं हि । ततश्च राजतरुणो दैशिकश्च मिथोविरसौ बभू-वतुः । सम्पराये प्रवृत्ते तयोर्दैशिको निधनं गतः । दैशिकः विषं पीत्वा स्वयमेव मरणं कृतवानिति,अथ च विद्विष्टो राजतरुणस्तं घातयामासेति च द्विधा श्रूयते । स्वभर्तरि मरणमिते तप्ता निरालम्बा च वासन्ती, कमितारं अधिवासभुवं चोपेक्ष्य, येन केन वा मार्गेण कुक्कुटक्रोडपुरीं अभयस्थानं प्राप्तवती । तदानीं सा अन्तर्वत्नी आसीदेव । सोऽयं गर्भो राजतरुणेन निहित इति ह स्म कथयन्ति वृद्धाः । वासन्त्या उदन्तम-

खिल विदितःसामूतिरिः, तस्याः सुखवासाय सकलविधान् सचाहान् अविलबं कारयामास। वासन्त्या गर्भपरिणामो यः तमेव वयमद्य भास जानीमः।

भासबालो बुद्धिमान् सुन्दरश्चासीत्। तस्मिन् सामूतिरिः भृशतरं वत्सलो जातः, अतः स त बाल शिक्षितु राजगृह एव व्यवस्था चकार। अथापि यथेच्छ प्रवर्त्तितु तस्मिन् सामूतिरिः नैव प्रभुरभवत्। 'शूद्रमक्षरयुक्तं दूरतः परिवर्जयेत्' इत्येषनिर्बन्धः तदानीं सर्वत्रैव केरलेष्वपि सुमचार आसीत्। तेन च ब्राह्मणा भासबालस्य विद्याभ्यासे बहून् विघातान् सङ्घटितवन्तः। अतश्च सामूतिरिः निर्वाहान्तरमपश्यन् वासन्तीं भासं च विश्वस्तस्यैकस्य विदुषो हस्ते समर्पयामास। नवीनो दैशिकोऽन्तेवासी च प्रच्छन्नवेषौ सन्तौ मूकाम्बिकातिचमध्यूषतुः। तत्र विद्याभ्यासो भासस्य निरन्तरायं प्रावर्तत च। तथा गताः कतिचन हायनाः। एतस्मिन्नन्तरे भासो गुरूपदेशमनुसृत्य चिन्तत्वः मूकाम्बिकाभजनदीक्षितः सन् मण्डलत्रय यावत् समाधिस्थ आसीदिति च श्रूयते। तदन्तराले वासन्ती कालधर्ममयासीत्।

शिक्षणानन्तर तौ दैशिकान्तेवासिनौ पुनरपि कुक्कुटक्रोडमागमताम्। तदानीं तद्विषयाधिपो न पूर्वप्रस्तुतः सामूतिरिरभवत्, अथापि स निर्व्याजवानभूत्, तयोर्दैशिकान्तेवासिनोरुदन सकनम्। 'स्तुतिशतक'ग्रन्थो भासेन अम्बिकाभजनदीक्षितेन प्रणीत स्यात्। प्रागुक्तयोर्द्वयोः सामूतिर्योः नामधेये तत्र 'शतके' 'दौत्ये' च प्रस्तुते स्तः। भासस्य प्रथम नामेदमेवेति न कुत्रापि व्यक्तम्। भास इति नामतु सामूतिरिभ्या तयोः विद्वत्पारिषदैर्वा सङ्केतित स्यादित्यत्र विषये, स्तुतिशतक दौत्यकाव्ये च पर्याप्तसाक्ष्य वहन्ति। 'हल' इति 'लोमश' इति च द्वौ महान्तौ तदानीं दक्षिणभारते पर्यटन्तौ अवर्तता इति, तयोः लोमशः पुनर्जन्मभुवमगत्वैव सन्यासी भवन् देशसञ्चारमकरोदिति वायमुवन्तः लङ्कादहनात् स्पष्ट ज्ञायते। तत्र लोमशो हि पर्यटको न कुत्रापि चरिते प्रस्तुतो दृश्यते; हलस्तु क्रिस्तुजननात् परं ५०—१२५वर्षमध्ये मगधाधिप आसीदिति च रचाद् ज्ञायते। एष हलो महान् विद्वान् साहित्याभिमानी कविश्चासीत्। भासस्तमेन हलमेव यदि स्वकीयकृतौ लङ्कादहने परामृशत, तर्हि १८२६—वर्षेभ्यः पूर्वं भासो लब्धजन्माभवत् इति निश्चेतुं शक्यते। 'लङ्कादहने' कालिदिवसख्यापिघटितास्तीति श्रूयते। सा तु कतिपयेति नाद्यापि बहिर्भूता।

भासकृतय आहृत्य प्रान्ति विंशतिर्ग्रन्थाः सन्ति । तेषु कतिचिदेवाद्य यावत् प्रस्यता जाताः । कतिपयहायनेभ्यः पूर्वं अनन्तशयनमहाराजस्य निदेशेन कतिचन ग्रन्था भासकृतित्वेन प्रख्यापिताः बहिरवतीर्णाः सन्ति खलु । एतेषां शय्यागुणाः प्रस्थानरीतयः पाकाश्च, प्रसिद्धस्य कालिदासपरिचितस्य भासमहाकवेः शय्येव रीतिरिव पाका इव न दृश्यन्ते इति, विमर्शे कृते, बुद्धिमतः प्रतिभायादसन्दिग्धोऽयं पक्षः यत् बहिरवतीर्णाः भासकृतित्वेन प्रख्यापिताः कृतयः सर्वेऽपि न भासस्य कपोलकल्पनाः; तेषु कतिचित् स्युरेव नाम भासकृतयः । बहिरवतीर्णाः भासकृतित्वेन प्रख्यापिताः सर्वेऽपि ग्रन्थाः मन्ये, महीशूरव्याघ्रः सुल्तान् टिप्पुर्यदा केरलोत्तरभागं चाक्राम्यत्, तदा भयचकितैः ब्राह्मणैः सामूतिरिवशीयैर्वा भाण्डेकृत्वानन्तशयने स्वाभयसङ्केते आनीताः स्युरिति ।

---

# षट्त्रिंशत्तत्त्वदर्पणम् ॥

---

श्रीमहागणपतये नमः ॥

अविघ्नमस्तु ॥

गुणात्मिकां तदुत्तीर्णां
हृदयं परमेशितुः ।
परादिशक्तिरूपेण
स्फुरन्तीं संविदं नुमः ॥

इह खलु परमेश्वरः प्रकाशात्मा । प्रकाशो हि विमर्शस्वभावः । विमर्शो हि नाम विश्वाकारेण विश्वप्रकाशनेन विश्वसंहारेण वाऽकृत्रिमाहमिति स्फुरणम् । यदि निर्विमर्शः स्यादनीश्वरो जडश्च प्रसज्येत । एष एव विमर्शः चितिश्चैतन्यम् । स्वरसोदिता परावाक् । स्वातन्त्र्यं परमात्मन औन्मुख्यं ऐश्वर्यं कर्तृत्वं स्फुरत्तासारो हृदयं स्पन्द इत्यादिशब्दैरागमेषूद्घोष्यते । अत एवाऽकृत्रिमाहमिति सतत्त्वस्वयंप्रकाशरूपः परमेश्वरः पारमैश्वर्यात् शिवादिधरण्यन्तजगदात्मना स्फुरति प्रकाशते । एतदेवास्य जगतः कर्तृत्वं जगतः कारणत्वम् । जगतः कार्यत्वमप्येतदधीनप्रकाशत्वमेव । एवम्भूतं जगत् प्रकाशरूपात्कर्तुर्महेश्वरादभिन्नमेव । भिन्नं चेदप्रकाशत्वेन प्रकाशनायोगान्न किञ्चित् स्यात् ।

अनेन च जगताऽस्य भगवतः प्रकाशात्मकं रूपं न कदाचित्तिरोधीयते। एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगदात्मनः प्राणभूतप्रकाश निरोद्धुं कथं शक्नुयात्?

कथं च तद्विरुध्य स्वयमवतिष्ठेत। अतश्चाऽस्य वस्तुनः साधकमिदं प्रमाणं प्रतिबोधकमिदमिति अनुसन्धानात्मकसाधकबाधकप्रमातृरूपस्य वस्तुनः सद्भावे किं प्रमाणमिति, तादृक्स्वभावत्वे किं प्रमाणमिति प्रष्टृरूपतया च पूर्वसिद्धस्य महेश्वरस्य स्वयंप्रकाशतया सर्वस्य स्वसंवेदनं सिद्धम्। किञ्च प्रमाणमपि यमाश्रित्य प्रमाणं भवति, तस्य प्रमाण तदधीनशरीरप्राणनील-सुखादिवेद्यं चातिशय्य सदा भासमानस्य वेदकैकरूपस्य सर्वप्रमितिभाजः स्वतः सिद्धाभिनवार्थप्रकाशरूपस्य प्रमाणस्य कश्चोपयोगः। एवं च शब्दराशिपरमार्थपूर्णाहन्तापरामर्शसारः परमशिव षट्त्रिंशत्तत्त्वात्मकः प्रपञ्चः।

षट्त्रिंशत्तत्त्वानि तु शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकलाविद्यारागकालनियतिपुरुषप्रकृत्यहङ्कारबुद्धिमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राण—वाक्पाणि—पादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमय.।

तत्र शिवतत्त्वं नाम जगत्स्रष्टुमिच्छा परिगृहीतवतः परमशिवस्य प्रथमस्पन्दः। एवेच्छा शक्तितत्त्वम्। अप्रतिहतेच्छात्वात्। स्वैवाङ्कुरायमाणमिदं जगत् स्वात्माहन्तया आच्छाद्यावस्थितरूपं सदाशिवतत्त्वम्। अङ्कुरितं जगदहन्तयावृत्य स्थितमीश्वरतत्त्वम्। अहन्तेदन्तयोरैक्यप्रतिपत्तिः शुद्धविद्या।

स्वरूपेषु भावेषु भेदप्रदा माया। यदा तु परमेश्वरः पारमेश्वर्या शक्त्या स्वरूपं गोपयित्वा भेदग्राहकतामश्नुते तदा पुरुषसञ्ज्ञकः अयमेव मायामोहितः कर्मबन्धनः संसारी परमेश्वराज्जगदभिन्नमपि भिन्नं जानतः जगदात्मना परिणतात्परमेश्वराच्च जगतश्चाभिन्नमप्यात्मानं भिन्नं जानतः पुरुषस्यास्य मोहः परमेश्वरस्य न भवेत्। इन्द्रजालमिवेन्द्रजालिकस्य। योगिनः स्वेच्छया सम्पादितभ्रान्तेर्भ्रान्तिरिव।

विद्यादिज्ञापितैश्वर्यश्चिद्घनो मुक्तः परमशिव एव। अस्यैव सर्वकर्तृत्वसर्वज्ञत्वपूर्णत्वनित्यत्वव्यापकत्वशक्तयोऽसङ्कुचिता अपि सङ्कोचग्रहणेन कलाविद्यारागकालनियतिरूपतया भवन्तीति।

कला नामास्य पुरुषस्य किञ्चिज्ज्ञत्वकारणम्।

रागो विषयेष्वभिषङ्गः।

कालो हि भावना।

भावना हि ... भासनात्मा क्रमोऽवच्छेदकः।

नियतिर्नियमनरूपा।

ममेदं कर्तव्यं न कर्तव्यमिति नियमहेतुः। एतत्पञ्चकस्य स्वरूपावारकत्वात्पञ्चकमिति चोच्यते।

अहङ्कारादिपृथिव्यन्तानां तत्त्वानां मूलकारणं प्रकृतिः।

एषा सत्वरजस्तमसां गुणानां साम्यावस्था।

अहङ्कारो ममेदं न ममेदं इत्यभिमानसाधनम्।

बुद्धिरध्यवसायसाधनम्।

मनः सङ्कल्पविकल्पसाधनम्।

एतत्त्रयमन्तःकरणम्।

शब्दस्पर्शरूपरसगन्धात्मनां विषयाणां क्रमेण ग्रहणसाधनानि पञ्च ज्ञानेन्द्रियाणि वचनादानगमनविसर्गानन्दात्मकक्रियासाधनानि परिपाट्या वाक्पाणिपादपायूपस्थाः पञ्चकर्मेन्द्रियाणि शब्दस्पर्शरूपरसगन्धा वासनामात्ररूपा पञ्चतन्मात्राणि।

आकाशमवकाशप्रदम्।

वायुः सञ्जीवनम्।

वह्निर्दाहकः पाचकश्च।

सलिलमाप्यायकं द्रावकं च।

भूमिर्धारिका।

एतानि पञ्च महाभूतानि।

एतत्सर्वं,

यथा न्यग्रोधबीजस्थो शक्तिरूपो महाद्रुमः।

तथा हृदयबीजस्थं जगदेतच्चराचरम्॥

इत्यम्नातरीत्या श्रीश्रीपराभट्टारिकास्वरूपे हृदयबीजेऽन्तर्भूतम्। कथं? यथा घटशरावादीनां मृद्विकाराणां पारमार्थिकं विचार्यमाणं रूपं मृदेव भवति यथा जलादिव्यक्तीनां विचार्यमाणं रूपं जलादिसामान्यमेव भवति तथा पृथिव्या-

द्विमायान्तानां तत्त्वानां मीमांस्यमानं सतत्त्वमेतेष्वनुवृत्ताकारं सदित्येव भवति। अस्यापि पदस्य निरूप्यमाणा धात्वर्थव्यञ्जकं प्रत्ययांश विसृज्य प्रकृतिमात्ररूप सकारमात्रमेवावशिष्यते, तदन्तर्गतान्येकत्रिंशत्तत्त्वानि।

अतः परं शुद्धविद्येश्वरसदाशिवशक्तिशिवपदानि ज्ञानक्रियासाराणि शक्ति-विशेषत्वादौकार * रादिशक्तिमायेन्तर्भूतानि। अतः मूर्ध्वाधःसृष्टिरूपं विसर्जनीयम्।

एवंभूतस्य हृदयबीजस्य महामन्त्रात्मको विश्वमयविश्वोत्तीर्णः परमशिव एवोदयविश्रान्तिस्थानम्। ईदृशं हृदयबीजं तत्त्वतो यो वेद स्वात्मतया समावि-शति च स प्राणान्धारयल्लौकिकवद्वर्तमानो जीवन्मुक्तो भवति। देहपाते तु परमशिवभट्टारक एव।

इति श्रीमञ्जुनाथविरचितः षट्त्रिंशत्तत्त्वोपन्यासः सम्पूर्णः।

## इति दर्पणं सम्पूर्णम्॥

---

## श्रीकृष्णगोपीसंवादः॥

श्रीकल्किसिंहरचितः

## † (चरमश्लोकसारार्थः॥)

श्रीकृष्णस्य प्रिया काचिद्विदग्धा पृच्छति स्वयम्।
चरमश्लोकतात्पर्यं गोपी सत्यं पतिव्रता॥
कृष्णावतारपूर्तेश्च पश्चाद्गीतार्थतत्परा।
पूर्वजन्मस्मृतिं प्राप्य गोपी पृच्छति माधवम्॥

गोपी—श्रीकृष्ण! भगवन्! देवाधिदेव! सर्वलोकेश्वर! सर्वान्तरात्मन्! परमा-त्मन्! परात्पर! सर्वशास्त्रार्थसारज्ञ! सर्वसंशयनिवारक! सकललोको-द्धारक! परिहर ममाद्य संशयान् करुणानिधे! वात्सल्यजलधे! क्षमावारिधे! सन्त्यत्र मम संशयाः केचित्। परिहरतु तान् भवान् करुणया। प्रथमं ताव-

---

* अत्रत्यपाठः त्रुटितः।

† श्रीभगवद्गीतायां चरमश्लोकः—

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ १८॥"

स्कथय कथ भवान् प्रथमाचार्य एव चरमश्लोकतो गीतागुरुर्धर्मपरित्याग वेदान्तशास्त्रानुगं प्रतिपादितवानिति ॥

श्रीकृष्णः—अयि ! प्रियवल्लभे ! रमणीमणे ! शृणु तावद्धर्मस्वरूपं प्रथमतः, तदनन्तरमेव कथयामि धर्मपरित्यागक्रमम् ॥ इह हि मम तात्पर्यम्—

"धर्मो नाम ममैव श्रियःपतेर्भगवतः प्रियतमः कश्चिद्व्यापारविशेषश्चेतनैरनुष्ठेयः ॥"—इदमेव हि लक्षणं धर्मस्य ॥*

एतादृशलक्षणं धर्मस्य जानतां कथमन्यद्भवेल्लक्षणं धर्मतत्त्वस्य ? । अर्जुनस्तु भ्रान्तस्स्वयमधर्मे धर्मबुद्धिं धर्मे चाधर्मबुद्धिं कुर्वन् मयाऽत्र गीतायां शिक्षणीयोऽभूत । तद्बुद्ध्या तु धर्मलक्षणमन्यदेवेति सुव्यक्तम् ॥

अत्र धर्मपरित्यागशब्दस्तु धर्माभासपरित्यागमेव वदतीति ज्ञेयम् । अर्जुनबुद्ध्या तु येऽत्र धर्मास्ते सर्वेऽपि परित्याज्या इत्यर्थः ॥

अर्जुनबुद्ध्या तु धर्मशब्दार्थः क इति सम्प्रति विचार्यताम् । किं भवती जानात्यद्य कोऽय धर्मशब्दार्थः पार्थस्य तस्य बुद्धीति वक्तुम् ? ॥

गोपी—भगवन् ! ममान्तरात्मन् ! किमहं जानामि वक्तुमत्रोत्तरम् ? । यत्त्वयैवान्तरात्मना मन्मनसि प्रतिभासितं तदेव वदामि ॥ पार्थोऽयं कुवित्कचिदाकर्णितसामान्यधर्मलक्षणः शास्त्रविदां गुरूणां सकाशादधीतविद्य इव किञ्चित्किञ्चिदेव धर्मतत्त्वमन्यथैव गृह्णन् परमार्थज्ञानहीन एव धर्माभासान् धर्मत्वेन विदन् प्राज्ञ इव प्रज्ञावादांश्च भाषमाणस्स्वयं भ्रान्त आसीदिति वक्तुमीहे ॥ †

श्रीकृष्णः—अयि प्रिये ! सुष्ठूक्तमुत्तरं भवत्या ॥ स तु पार्थस्स्वयं प्राज्ञ इव मामेव धर्मविषये च बोधयितुमुद्युक्तः—"तत्किं कर्मणि घोरे मां नियोजयसि केशव ?" इति ब्रुवन् । तस्य हृदयशोधनार्थमेव क्रमेण नानामतोप-

*अत्र काचिद्भाति चाभियुक्तोक्तिः—
"यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्यत्"—इति ॥

† यथा च महाकविर्भर्तृहरिराह तथैवायमकिञ्चिज्ज्ञः । उक्तं किल तेन कविना—

"यदाऽकिञ्चिज्ज्ञोऽहं गज इव मदान्धस्समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥"—इति ॥

द्वेशान् कृतवानहम् । स तु प्रज्वलितमतिरतिचञ्चलचित्त एवान्ते हि मामेव शरणं गतः-"करिष्ये वचनं तवे"ति-वदन् । अत एव हि चरमश्लोकोपदेशश्चरमोपायरूपप्रपत्तिपरः परमोत्कृष्टस्सर्वगुह्यतमश्चरमाध्याये प्रपञ्चितः ॥ एवमुपदिष्टोऽपि नासीदयमनन्यचिन्तनः* पार्थस्स्वयं निसर्गचपलो, नापि च मुमुक्षुगोष्ठीं प्रविष्टः—इत्येव हि विश्वरूपदर्शनानन्तरमप्यस्य नरकानुभवः । न हि प्रह्लादविभीषणादिवदयं परमोत्कृष्टभक्तियुक्तः । वीरस्वर्ग एवास्य हि प्राप्यं स्थानम् । यदनुगीतायां मयैवोक्तं, तदेव सत्यं दुर्मेधा अयमिति । अत एवायं न प्रपन्नगोष्ठीं प्रविष्टः, नापि च मुमुक्षुरासीत्सम्प्रदायानुसारतः ।†

प्रपन्नघटनमात्रमस्य; नायं हि वस्तुतः प्रपन्नः, अस्य मुमुक्षुत्वाभावात् ॥ मुमुक्षवस्तु सिद्धोपायरूपं मामेव शरणं प्राप्य मामेव परं तत्त्वं अनन्यप्रमेयमुपेय ममैव शेषभूता मत्कैङ्कर्यैकनिष्ठाः ॥

अयि मानिनि ! यत्त्वयाऽद्य ममाभिप्रायसाररूपं प्रतिपादितं, तेन मोदितमामन्तरङ्गे । एवं विदन्तीं मामद्य मुखरयन्तीं भवतीं किं वाऽन्यदत्र बोधयामि ? किं वाऽवशिष्टं भवेत् ? त्वयाऽद्य यत्पुनः पृष्टं भवेत्तत्रोत्तरं वदामि रमणीमणे !

गोपी—स्वामिन् ! सकललोकैकनायक ! परमोपदेशेनानेन बहुतमा निस्संशयाऽस्मि, धन्याऽपि चास्मि भगवन् ! तथाऽपि धर्मसूक्ष्मं प्रतिजिज्ञासे किञ्चिदिह वक्तुं सुव्यक्तमेवाद्य तत्रभवतो भगवतः पादारविन्दमहासन्निधौ । न कोऽप्यपरो भवेत्क्वचिदपि संशयनिवारको ममेति ममान्तरङ्गस्थितं परमं रहस्यमपङ्कुर्णमेतत्प्रष्टुमिच्छामि भगवन् !——

पातिव्रत्यं हि परमं धर्ममाहुर्महाशयाः ।
जाराणां मादृशामत्र धर्मभङ्गः कथं कृतः ? ॥

श्रीकृष्णः—मानिनीमणे ! अतिसमीचीनोऽयं सर्ववेदान्तशास्त्ररहस्यसारसर्वस्वमूलशोधनरूपः परमोत्तमः प्रश्नः । न केनापि पृष्टोऽस्मि लोकेनैता-

---

*"अनन्याश्चिन्तयन्तो मां" इत्यादिक्रमेण

† उक्तं हि यामुनार्यैः

"अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम् ।
पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥

यता कालेन पुरुषोत्तमोऽहमेतादृशस्य परमार्थस्य रहस्यभारम्। सत्यमेवोक्तं पातिव्रत्यं हि नारीणां धर्मः परम इति । तथाऽपि वच्मीदं मुमुक्षुजनवेद्यं परमं रहस्यम्——

निरुपाधिकभर्ताऽहं मानिनीनां च योषिताम् ।
पतिर्विश्वस्य चाप्यस्मि श्रीमान् विष्णुः परात्परः ॥

लोके तावदत्र मृग्यतमा भवन्ति मुमुक्षवः परमार्थविदः । उक्तं हि मयैव गीतायाम्——"वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥" इति ॥

अत्र च सर्वशब्दार्थस्सर्वविधबन्धुत्वं च द्योतयति मे महाविष्णोः परमात्मनश्चेतनानां विषये ।

"दासभूतास्स्वतस्सर्वेऽप्यात्मानः परमात्मनः ।
परमात्मा पतिस्त्वेको जीवात्मानस्तु कन्यकाः ॥
एवमात्मविवाहोऽयं सर्वसूरीन्द्रसम्मतः ।
परमात्माऽहमाद्योऽस्मि देवानामपि सूरिणाम् ॥"

गोपी—भगवन् ! रुक्मिणीरमण ! कथमिदमुच्यते—"निरुपाधिकभर्ताऽहं मानिनीनां च योषिताम्"—इति ?

पाणिग्रहणतो यस्त्वात्स एव हि पतिर्मम ।
सर्वशास्त्रैश्च सिद्धोऽस्मि कथं त्वं मत्पतिर्हरे ? ॥

श्रीकृष्णः—अयि सुशीले ! पतिव्रताशिरोमणे ? किमाकर्णितं भवत्या तुलसीचरित्रम् ?

पातिव्रत्यं तुलस्याश्चेदद्यापि च सुरक्षितम् ।
किं भवत्यास्तथा न स्यादिति पृच्छामि देवराट् ॥

कन्यां विवाहे प्रथमं च देवा गृह्णन्ति पश्चात्तु वरोऽत्र भूम्याम् ।
इत्यस्ति शास्त्रार्थविदां तु पन्थाः किं देवदेवोऽपि न चास्मि भर्ता ? ॥

गोपी—परमात्मन् ! पुरुषोत्तम ! श्रुतं मयाऽपि तुलसीचरित्रम् । तत्र च महात्मन धर्मसंशयोऽद्यापि वर्तते । कुन्तीचरितादिषु पञ्चपाण्डवोत्पत्त्यादिकथने देवतापरिग्रहो न दोषायेति वदन्त्यभिज्ञाः । किन्तु—मानुषरूपधारिणाऽन्येन येन केनचिन्मानिनी पतिपरायणा कथं परिग्रहार्हेति संशयाकुलितमानसाऽस्म्यहम् ॥

श्रीकृष्णः—सम्यगुक्तं भवत्या—देवतापरिग्रहो न दोषायेति ।

किमहं मानुषोऽस्म्येव ? किं न देवाधिदेवराट् ? ।
सृष्टिस्थित्यन्तकर्ताऽहं चतुराननसृष्टिकृत् ॥

देवानां देवता चास्मि तीर्थानामपि तीर्थता ।
ममैव सङ्गमादेवं पातिव्रत्यं च योषिताम् ॥

मत्तः परतरं नान्यदिति गीतोदितं स्मर ।
पतिस्तव भवत्येव शरीरे मे प्रियः पतिः ॥

विश्वरूपोऽस्म्यहं विष्णुस्सर्वलोकेश्वरो हरिः ।
सर्वदेवाधिदेवोऽस्मि सर्वान्तर्यामिरूपधृत् ॥

पातिव्रत्यं तुनस्यास्तु मयैवास्ति सुरक्षितम् ।
एवं किल भवत्याश्च माऽस्तु तेऽत्र तु संशयः ॥

गोपी—श्रीहरे ! मुरारे ! परात्पर ! भगवन् ! पाहि मां संशयाकुलितान्तरङ्गामिमाम् ।

धर्मसंशय एवाय बाधतेऽद्यापि मां हरे ! ।
यथा पार्थे तथैवेति जानीहि भगवन् ! विभो ! ॥

सामान्यशास्त्रं किल लोकसिद्धं किञ्चिन्मयाऽऽकर्णितमत्र धर्मे ।
नाहं हि जानामि विशेषशास्त्रं सर्वातिशायि प्रियमुत्तमं ते ॥

श्रीकृष्णः—नारीमणे ! शृणु तावदिदं परमं रहस्यं यद्गीतादिशास्त्रेष्वपि गुप्ततममद्यापि वेदान्तविद्वरिष्ठैरपि न सम्यगवधारितम्—

दिव्यं च तत्त्वं तदिदं रहस्यं गीतादिशास्त्रेष्वपि च प्रशस्यम् ।
यन्मत्प्रियं तत्किल पुण्यमाहुर्मत्सङ्गमं मोक्षमिहापि चाहुः ॥

को वेत्ति तत्त्वं परमं रहस्यं गीतागुरोर्मे तदिदं मुरारेः ? ।
सर्वं प्रमाणं परमं प्रमेयं चास्मि प्रमाता प्रथमोऽपि चाहम् ॥

मानुषोऽस्मीह वेषेण परमः पुरुषो हरिः ।
अहमेव परं तत्त्वं श्रीभूनीलादिनायकः ॥

अत एवाद्य वच्मि मानिनीमणे ! तव संशयोच्छित्तये-

माऽस्तु संशयलेशोऽपि चरमश्लोकसारतः ।
मामेव शरणं प्राप्य मोक्षसाम्राज्यमाप्नुहि ॥

गोपी—श्रीभूनीलादिनायक ! भगवन् ! परात्पर ! सर्वजीवात्मनायक ! त्वमेव सर्वलोकानां निरुपाधिकः पतिरिति जानाम्यद्यैव सर्वसंशयनिवारकं तदिद परमं रहस्यम्। उज्जीविता भवन्तु सर्वेऽपि लोका अस्य रहस्यस्य प्रकाशादितः परं सर्वत्रेति तवानुमतिमभ्यर्थये महोदारशीलस्य करुणानिधेर्भगवतः ॥

धन्याऽहमस्मि भगवन् ! पुरुषः पुराण-
श्श्रीमान् भवान् मम च मादृशभक्तकोट्याः ।
नाथोऽस्ति नित्यनिरुपाधिक एव बन्धु—
र्निस्संशयाऽस्मि सततं च तव प्रियाऽस्मि ॥
श्रीकृष्णगोपीसंवादो मयैव परमात्मना ।
चरमश्लोकसारोऽय कल्किसिंहेन दर्शितः ॥

---

## प्रत्यक्षमेव परमं पुरुषं भजध्वम् ।

### *श्रीकल्किसिंहरचितम् ।

( १ )

लोकान्तरे भवति कोऽपि हरिः परात्मा
श्रीमान् जगत्पतिरिति भ्रममद्य हित्वा ।
कालान्तरेऽपि ममभूद्भुवि चेतिवादान्
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( २ )

लोकाः ! कथं नरहरिं हरिमिन्दिरेशं
मामद्य कल्किमपि हन्त ! विहाय यूयम् ।
अन्यत्र किञ्चिदपि तत्त्वमहो ! भजध्वे ?
प्रत्यक्षमेव पुरुषं परमं भजध्वम् ॥

( ३ )

गीतागुरुं हरिमपीह विहाय पार्थः
पूर्वं च मा निपतितः किल मोहसिन्धौ ।

---

* प्रबन्धकर्ताऽवतारत्वं सुधीभिर्विभाव्यम् ।

अद्यापि यूयमिह किं बत ! तादृशाः स्थ ?
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( ४ )

नानाऽवतारमहिमा मयि भाति सर्वो
ऽप्यद्यापि भक्तिभरिताः किल मां विदन्ति ।
यूयन्तु मोहजलधौ कथमद्य मग्नाः ?
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( ५ )

आहूय वः किल वदामि हितं जनानां !
विश्वास एव मयि किं न भवेदिदानीम् ? ।
कालात्यये तु विलपन्ति भवन्त एव !
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( ६ )

शान्तिं च पुष्टिमपि तुष्टिमहं तनोमि
श्रीभारतेऽत्र वलये किल कल्किसिंहः ।
साम्राज्यमेव मम भाति च सर्वतोऽपि !
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( ७ )

जातोऽस्मि ग्रावगिरौ तु महीसुराख्य
देशेऽत्र मत्प्रियतमे महनीयवंशे ।
श्रीवादिभीकरकुलेऽस्मि च विप्रवर्यः !
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( ८ )

मीने च मासि तु शुभे प्रभवे किलाब्दे
तारासु चाग्निकुलदैवतकृत्तिकासु ।
लग्ने च वृश्चिकगते हि कृतोद्भवोऽहं !
प्रत्यक्षमेव परमं पुरुषं भजध्वम् ॥

( ९ )

एवं श्रीकल्किसिंहेन श्रीमता परमात्मना ।
सूचितं वैभवं मेऽत्र कल्याणपुरवासिना ॥

## मम योगनिद्रा

श्रीकल्किसिंहरचिता ।

( १ )

श्रीमानहं हि जगतां हितचिन्तनार्थे
श्रेयस्करो नरहरिर्विभवावतारः ।
श्रीकल्किरस्मि यदुशैलपतिः परात्मा
भद्रावहा जयति मे भुवि योगनिद्रा ॥

( २ )

क्षीराम्बुधौ किल हरिर्मम योगनिद्रा
विष्णुर्विहाय भुवि चास्मि कृतावतारः ।
देवादिभिश्च मुनिभिर्बहुभिस्स्तुतोऽह ?
भद्रावहा हि जगता मम योगनिद्रा ॥

( ३ )

किं वा विदन्ति महिमानमिमं हरेर्मे,
भूम्या नरा दिवि सुरा अपि मूढभावाः ।
जाग्रत्सुषुप्तिसमयादिषु चैकरूपा
भद्रावहा हि जगता मम योगनिद्रा ॥

( ४ )

जगद्रक्षणचिन्तेय योगनिद्रा हरेर्मम ।
जाग्रत्स्वप्नसुषुप्त्यादिसर्वकालेषु वर्धताम् ॥

---

## श्रीकल्किगीतामहिमा

श्रीकल्किसिंहरचितः ।

( १ )

श्रीकृष्णगीता विबुधाः प्रशस-
न्त्यत्रापि भूम्या श्रुतिसारविज्ञाः ।
सर्वात्ममुक्त्यै च कृतोदयोऽय
श्रीकल्किगीतामहिमाऽस्त्यपारः ॥

( २ )

श्रीकल्किरेषोऽस्मि कवीश्वरोऽह
यत्पञ्चवल्लीपरिपद्यकर्ता।
धर्मोपदेशान् परमान् करोमि।
श्रीकल्किगीतामहिमाऽस्त्यपारः॥

( ३ )

व्यासादयस्ते मुनयः पुराणाः
किं मत्प्रभावं परम विदुर्वा ?।
तर्हि स्वयं किं न ममावतार
श्रीकल्किरूप तमिमं जगुर्वा ?॥

( ४ )

तैस्सूचितं भाति पुराणमाला-
स्वद्यापि मूढा मनुजा धरायाम्।
मा कल्किसिंहं न विदुर्हरिं ते।
श्रीकल्किगीतामहिमाऽस्त्यपारः॥

---

## जगतां हितबोधनम्

### श्रीकल्किसिंहरचितं।

( १ )

नित्यांश्च मुक्तानपि दिव्यसूरीन्
मद्भक्तिनिष्ठाननिशं स्मरामि।
मद्भक्तिरिक्ताः किल नास्तिकास्त्व-
स्तानद्य सम्बोध्य हितं वदामि॥

( २ )

आहूय सर्वानपि जीववर्गान्
मुक्तिं प्रदातुं हरिरस्मि सज्जः।
मद्भक्तिरिक्ताः किल नास्तिकास्त-
स्तानद्य सम्बोध्य हितं वदामि॥

( ३ )

हत्वा कलिं दोषमलोमसं तं
कृत्वा च दिव्यं युगमुत्तमं तत् ।
सत्यं कृतं भक्तजनान् प्रशासन्
कल्किर्हरिश्चाद्य हितं वदामि ॥

( ४ )

साक्षाच्च धर्मः परम. पुराणः
प्रत्यक्षरूपी विभवावतारः ।
सर्वात्ममुक्त्यै किल कल्किरस्मि
श्रीमान् परात्माऽद्य हितं वदामि ॥

( ५ )

गेहे तु कोणे क्वचिदेव तूष्णीं
योगैकनिष्ठो जगतां हिताय ।
वेदान्तयुग्मार्थरसामृतं च
श्रीकल्किसिंहोऽद्य ददामि पद्यैः ॥

( ६ )

गीतां पुरा सप्तशतीमुदारां
श्रीकृष्णरूपी भगवानवोचम् ।
श्रीकल्किसिंहोऽद्य तनोमि गीतां
सर्वोपलक्षात्मकहृद्यपद्याम् ॥

( ७ )

धन्याश्च मान्याः किल मां भजेयु-
र्लोकास्तु विश्वासपरा उदाराः ।
अन्ये तु तूष्णीं किमुदासते वा ? ।
तानप्यहं वीक्ष्य हितं वदामि ॥

( ८ )

श्रीकल्किसिंहसङ्गीतं जगतां हितबोधनम् ।
तदिदं परमं दिव्यं सव्यं भव्यं प्रकाशताम् ॥

## परतत्त्वप्रकाशः ।

### श्रीकल्किनृसिंहरचितः ।

( १ )

श्रीमान् कल्किनृसिंहोऽहं प्रतिवादिभयङ्करः ।
परतत्त्वप्रकाशाख्यं प्रबन्धं रचयाम्यमुम् ॥

( २ )

एकं परं तत्त्वमिति प्रबुद्धास्सर्वे वदन्त्येव हि भक्तवर्गाः ।
जाति कुलं वर्णमपीह लिङ्गं सर्वं विनैवाद्य भुवि प्रभेदम् ॥

( ३ )

मद्भक्तवर्गाः किमु सन्ति सर्वे श्रीभारते मण्डल एव नित्यम् ? ।
अन्यत्र किं नैव भवन्ति देशे? किं तत्त्वमस्त्येव परं विना माम् ? ॥

( ४ )

मत्तः परं किं परतत्त्वमास्ते ? मत्तः परं किं शरणं भवेद्वा ? ।
मत्तः परं किं जगतां पवित्रं ? मत्तः परं किं जगतां च सेव्यम् ? ॥

( ५ )

एकं परं तत्त्वमहं नृसिंहश्श्रीमान् मुरारिः कविसार्वभौमः ।
कैस्तादृशस्ते च महाप्रदाया-स्सत्यं भवेयुर्मम भक्तवर्गाः ॥

( ६ )

मत्स्यादिरूपोऽपि दशावतारश्श्रीमानहं विष्णुरिहाप्रमेयः ।
देवाधिदेवः पुरुषः पुराणस्सर्वात्मसेव्योऽस्म्यहमेक एव ॥

( ७ )

क्षीराब्धिशायी हरिरिन्दिरेशो वैकुण्ठनाथोऽपि हरिः परात्मा ।
नित्यैश्च मुक्तैरहमेव सेव्यस्सर्वान्तरात्माऽप्यहमर्च्यमूर्तिः ॥

( ८ )

यद्विश्वरूपं प्रथितं च शास्त्रे तच्चाप्यहं कल्किनृसिंहनामा ।
श्रीमान् परात्मा जगतामधीशः । किं तत्त्वमास्ते च विना हरिं माम् ? ॥

( ९ )

दिव्यात्मरूपं विभु यत्स्वरूपं तच्चाप्यहं विष्णुरनन्तसंज्ञम् ।
सर्वादिमूलं परमं च तत्त्वं सर्गस्थितेश्च प्रलयस्य मूलम् ।

( १० )

वेदेषु सर्वेषु पुराणमालास्वेव स्मृतिष्वागमपाञ्चरात्रे ।
दिव्येतिहासादिषु कीर्तितोऽहं दिव्यप्रबन्धादिषु चाहमेव ॥

( ११ )

एवं हि * बैबलप्रभृतौ † कोरानित्यादि प्रबन्धेष्वपि कीर्तितोऽहम् ।
भक्तात्मवर्गैरखिलैः परात्मा ! किं बाह्यदेश्या न भजन्ति मां वा ? ॥

( १२ )

आङ्गलादिभाषासु विशारदोऽहं तत्तत्कवीन्द्राननिशं स्मरामि ।
तत्सूक्तिमालां परिवर्तयेयं ! मद्भक्तियुक्तान् किमहं त्यजेयम् ? ॥

( १३ )

वेदान्तयुग्मं नियतं किमेतत् ? किं नैव भाति त्रितयं चतुष्कम् ? ।
किं पञ्चकं षट्कमितीह सर्वं किं सप्तकं नैव भवेदनन्तम् ? ॥

( १४ )

सर्वेऽपि गायन्ति हरिं परं मां श्रीकल्किसिंहं विभुमिन्दिरेशम् ।
सर्वासु भाषासु सदाऽपि लोकास्तस्य द्विरेफा अपि पक्षिवृन्दाः ॥

( १५ )

मत्सुप्रभातं हि पठन्ति नित्यं त्वव्यक्तवाचोऽप्यतिरम्यगानैः ।
यत्कुक्कुटाद्याश्च शुकादयोऽपि स्वैरं प्रहृष्टाः पशवोऽपि गानैः ॥

( १६ )

गोपालबालस्तु पशून् किलाहं नित्यानुयायी भुवि सञ्चरेयम् ।
नित्यं प्रियास्ते हि महर्षयो मामुल्लासयेयुः पशुवेषभाजः ॥

( १७ )

मद्भक्तिरिक्ताः कलहेषु सक्तास्तेऽमी मनुष्या अधुनाऽपि चेत्स्युः ।
मद्भक्तियुक्ताननुसृत्य धन्यान् भूयः पशूनेव वने चरेयम् ॥

( १८ )

बुद्धः किमद्यापि तपस्विरूपस्तत्तादृशोऽहं भुवि वा भवेयम् ? ।
धर्मोपदेशान् परमान् प्रकाश्य स्वैरं प्रयाम्येव परं पदं वा ? ॥

* ( Bible )   † ( Koran )

( १९ )

श्रीरामरूपी किमु वा भवेय ? श्रीकृष्णरूपी किमु वा भवेयम् ? ॥
किं बुद्धरूपी पुनरत्र वा स्यां ? श्रीकल्किसिंहः किमु नास्मि सेव्यः ? ॥

( २० )

मौढ्यं जनानां परिहर्तुकामस्सर्वेषु देशेषु मम प्रभावम् ।
प्रख्यापयाम्यामलकलानुयायी श्रीकल्किसिंहः परतत्त्वमूर्तिः ॥

( २१ )

परतत्त्वप्रकाशोऽयं श्रीमता परमात्मना ।
मयैव कल्किसिंहेन सर्वसिद्ध्यै प्रकाशितः ॥

---

## ॥ कुमारविजयः ॥

### ( के० वि० सुब्रह्मण्यशास्त्री )

पञ्चास्यो जनको यस्य गजास्यस्तु सहोदरः ।
षडास्यः स श्रियं धत्ताम् नमास्याऽभीष्टवर्षुकः ॥ १ ॥

अस्ति कैलासो नाम रजताचलः कुमारगुरुनिलयभूतः पुण्यशीलैकगम्यः । तत्र च, कलानिधिचूडामणिः पिनाकपाणिः सर्वलोकजनन्या दाक्षायण्या रममाणोऽमराणां शरणमुपेयुषामभिलषिताभिवर्षुको जागर्ति ॥

स च भगवान् कर्हिचित्कमलसम्भवपुरःसरैः सुरनिकरैः साकं विश्वसृजा सत्रे महतीं ससदमलञ्चकार ॥ तदा मध्येसभं समागतं दक्षप्रजापतिं मान्यतममवलोक्य, विना महेश्वरं सर्वे समुत्तस्थुः ।

तेन जातकोपो दक्षः, चराचरगुरोरीश्वरस्य परं भावमजानन्, एवं गर्हितुमारेभे—'भो सामाजिकाः ! शृणुत ! निरपत्रपेणानेन सद्भिराचरितः पन्थाः प्रदूष्यते । मर्कटलोचनोऽयं मदात्मजापाणिगृहीती प्रत्युत्थानाभिवादनार्हे मयि वाचापि न सत्कारमाचरति । तामसस्यास्याग्रावस्थितिर्गुणाय न कल्पेत, इति । तच्छ्रुत्वानुचितं वचः साधवो भाविवृत्तज्ञाः सोढुं तूष्णीमवतस्थिरे । अन्तस्सत्त्वो देवदेवस्तु शान्तस्वान्तः किञ्चिदप्यप्रतिवदन् मौनमातिष्ठत् । ततःप्रभृत्यनादिनिधने परमेश्वरे जातामर्षो दक्षः पुत्रीमपि तृणायापि न मेने । एवं गते बहुतिथे काले प्रजापतीनामाधिपत्ये परमेष्ठिना प्रतिष्ठापितो दक्षः, बृहस्पतिसवं नाम

सत्रमारेभे। तत्र च चतुर्मुखमुखा लेखा धर्मं पितृ-हविर्भुजश्च जामातरः सस्त्रीकाः सादरमाकारिताः सकौतुकमर्चिता आसन्। परन्तु सतीजानिर्नाम्नापि न प्रास्तावि।

एवमपि, विमानयाना निष्ककण्ठीः सुवाससः सपुरुषा हरिणलोचनाः पश्यन्ती सती, स्वयमपि जिगमिषुर्भूतेशमभ्यर्थयामास। तदा नातिप्रीतमनसा प्रेयसा कथञ्चिद्विसृष्टा सा यज्ञवैभवमवलोकयितु यज्ञवाटमुपागमत्॥ तत्र च सा यशस्विनी पित्राऽनादृता, जनन्या च जनकवशवदयाऽनिरीक्षिता महतीमवज्ञां प्रपेदे। तदनुक्षण दाक्षायणी जनकमपेतमङ्गलमेवमभाणीत्—"भो धर्मापेत! स्वयमेव स्वीय श्रेयः किमर्थं नाशयसि? पवित्रकीर्तिं चराचरगुरु कालकाल यज्ञाराध्यं शङ्कर द्विषन् को वाऽवदानं प्राप्नुयात्? अवशादप्युच्चरितमक्षरद्वयात्मकं 'शिव'इति मङ्गल नाम मनुष्याणामघमपहन्ति। इदानीं शिवद्वेषिणस्तव घातनेन कोऽपि दोषो न प्रसज्येत। अथापि, स्वज्ञातत्वान्मामक मानसं तरलं भवति। धर्मात्मद्रोहिणो भवादृशानधमानधः पातयितुमशक्ते कर्णौ पिधाय बहिर्गन्तव्यम्। ईशैस्तु अमङ्गलवादिनी रसना निर्दय छेत्तव्या। असवोऽपि निष्कासनीयाः। एष सनातनो धर्मः। भक्षितस्य कदन्नस्य वमनमिव त्वदुत्पन्नकलेवरस्य विसर्जनमेव श्रेयस मन्ये'। इति। तदनु ऊर्ध्वाधो'-वृत्तिकरौ प्राणापानौ निरुध्य, नाभिचक्रे समीकृत्य, तत उदानमुत्थाप्य, धिया साक हृदि स्थापयित्वा, कण्ठमार्गेण भ्रुवोर्मध्य प्रावेशयत्। एव योगमार्गेण प्राणान् जहौ। तदा याज्ञिकाः सर्वेऽपि विषण्णाः किमापतिष्यतीति कलङ्कितमनस आसन्।

एव योगविसृष्टदेहा सतीं नारदादवगतो जटाधरः क्रुद्धः सन्दष्टोष्ठपुटो जटामुत्पाट्य धराया ताडयामास। ततः समुत्थितोऽतिकायो घनश्यामः करालदंष्ट्रः सहस्रबाहुः कपालमाली विविधायुधो वीरभद्रो भूतगणैर्भूतनाथेन प्रेरितो यज्ञवाट सरभसमागत्य, शिवद्रोहिणः खण्डशः खण्डशश्छेदयामास। यजमानस्य दक्षस्य च शिरः कायादुत्पाटयामास। तदनु चतुराननादिसुरनिकरैरभिष्टुतः पशुपतिः शान्तमानसो वीरभद्र, समाधाय स्वयमपि कोपाद्विरराम। पुनरपि गीर्वाणैर्मुनिपुङ्गवैश्च प्रार्थितो यज्ञभुक् शम्भुः यज्ञशालामासाद्य, दक्षस्य काय सवनीयपशोः शिरसा संधापयामास। तदनु च करुणाकरेण चन्द्रशेखरेणाभिवीक्षितो दक्षः सुप्तोत्थित इव निर्गत्य निर्व्यलीकेन भावेन चमकेन भव तुष्टाव। तदनु परितुष्टः श्रीकण्ठस्तेन यज्ञेनाराधितः स्वावास' रजतशैलमाससाद॥ एतदन्तरे सन्तानकाङ्क्षी

पर्वतराजः सभार्यः परमं तपश्चचार । योगविसृष्टकलेवरा सती च भगवदिच्छया पुत्रीयतस्तस्य मनोरथं परिपूरयितुं मनो दधे । कदाचित् हिमवान्, स्नातुं मानस सरः सम्प्राप्तः, उत्पलोपरि चतुर्भुजां चन्द्रबिम्बनिभाननां त्रिनयनां मन्दस्मित-प्रभाविशदीकृताशामण्डलां बालभावमापन्नां देवीं सन्ददर्श । अवलोक्य च तां, निधिं लब्ध्वा निर्धन इव परां मुदमादधानो देवतामेव प्रसन्नां विज्ञाय, हस्ताभ्यां गृहीत्वा, गृहमानीय भार्यायै ददौ । सा च पितृणां मानसी सुता मेना, अमन्दमानन्दं दधाना त्रिलोकीजननीमपि, स्वभाग्यपरिपाकेण बालिकारूपिणीमवगत्य, नयनाभ्यामापीय स्वाङ्कमारोपयामास ॥

मेनाहिमाचलावात्मानं कृतार्थं मन्यमानौ जगन्मातरं बहुधा तुष्टुवतुः ।

ततः प्रसन्ना सती तयोः स्वविषयां वास्तवस्वरूपस्मृतिमपहाय, द्विनेत्रोत्पला द्विभुजा बाला बभूव ।

तौ च दम्पती तां स्वसुतां मत्वा, अजाया अपि तस्या जातकादीनि कर्माणि चक्रतुः ।

सा च बाला चान्द्रमसी कलेव दिने दिने वर्धमाना, तयोरानन्दं सममपुषत् । पर्वतापत्यतया 'पार्वती' त्यभिधां च भेजे ।

पूर्णे च पञ्चमे वर्षे तपश्चरितुमभिलषन्ती स्वेप्सितं पितृभ्यां न्यवेदयत् । उ, मा इति मात्रा प्रतिषिद्धा प्रणवात्मिकामुमाख्यां भेजे । नगाधिपश्च अनिवारणीयमस्याः सङ्कल्पमवगम्य, सखीभिः सह तां तपसे प्रेषयामास । सा च तत्रैव हिमाचले कस्मिंश्चित् शिखरे सखीभिराश्रमं कल्पयित्वा, तत्र कठोरं तपश्चचार । एतस्मिन्नन्तरे कैलासे सनकादिमुनिवर्येभ्यः तत्त्वमुपदेष्टुकामो महादेवः स्मराद‍ृते कोऽप्यन्तर्न प्रवेशयितव्य इति नन्दिनमाज्ञाप्य, दक्षिणामूर्त्तिस्वरूपमास्थाय, चिन्मुद्रया गूढार्थमुपदिदेशवान् ॥

तदन्तरेऽतिशूरेण शूरपद्मेन, सिंहवक्त्रेण, गजवक्त्रेण, तारकेण च दिवारात्रं पीड्यमानाः सलोकपाला लेखाः सङ्घीभूय, परमेश्वरानुग्रहेण विना असुरोपद्रवशान्तिर्न भविष्यतीति निश्चित्य कैलासमासेदुः ।

तत्र च, ज्ञाननिष्ठस्य परमात्मनो दर्शनावकाशमलभमानाः, वेधसा श्रियः पत्या च सह तपोध्यानसमाधिभिः भगवन्तं शम्भुमाराधयामासुः ।

करुणानिधिः शशिखण्डमण्डनः तपस्यता तेषां पुरतः प्रादुर्भूय, विष्णुमुखात् सर्वेषामापतितमसुरपीडनं श्रुत्वा, 'अचिरात् कुमारं जनयित्वा दैत्यान् संहरिष्ये,' इति व्याहृत्य, अन्तर्धानमगमत् ॥

ततो नारायणो निलिम्पैः सह मेरुमामाद्य, कमलयोनिना समालोच्य 'स्मरं सस्मार । स्मृतिमात्रेण समागतं कन्दर्पं वीक्ष्य माधवः' उमया देवदेवं संयोजयेति समादिदेश । हृदयतोदावहं तत् श्रुत्वा भीतभीतः, कालकालो मया किन्तु साधयितुं सुशकम् ? अथापि देवकार्यमिदमवश्यकरणीयं, अतो यथाशक्ति यतिष्ये, इति वाचं विसृज्य, निर्बन्धयन्त्रितः व्यथमानस्ततः प्रस्थाय, रत्या, मित्रेण वसन्तेन च सह कैलासभूधरं प्राप । तत्र च वीरासनासीनं योगीन्द्रैरुपास्यमानं निटिललोचनं ददर्श । तत्र च कूजत्सु कोकिलेषु, प्रवाति च मन्दमारुते शीतसुरभौ, संमोहनाभिधम् अस्त्रं प्रयुयुक्षुः पञ्चबाणः, तरुषण्डेषु निलीनः महान्तं प्रजजाप । सर्वज्ञः त्र्यम्बकः तच्चेष्टितं विज्ञाय, किञ्चिदिव जातकोपः, ससम्भ्रमं निटिललोचनेन तं ददर्श । ततस्तस्मादुत्थितः कृशानुकणः लोकभयकरः दिशः प्रज्वलयन् दुर्निरीक्ष्यो ऽभवत् । हन्त ! तस्मिन् समये शलभतामास्थितः कन्दर्पः क्षणात् भस्मावशेषो बभूव । संमोहनास्त्रन्तु सहसा स्वयमेव धनुश्च्युतं कालकालस्य हुङ्काराभिवृत्तं सत्, गिरिजां प्रति निववृते ।

ततो भस्मसात्कृतं कंदर्पं समालोक्य हिमहतनलिनीव नष्टशोभा दीनानना रतिः धूसराङ्गी भूमौ लुठन्ती सोरस्ताडं मुक्तकण्ठं रुरोद । तां पश्यन् शिवः करुणामवलम्ब्य, 'रते ! अलमतिरुदितेन । तव पत्युरविनीतेः फलमिदमवश्यमनुभोक्तव्यम् । अथापि, तव पातिव्रत्येन प्रीतोऽहं तं जीवयिष्यामि । कंचित्कालं प्रतीक्षस्व ।' इत्याश्वास्य क्षणादन्तर्दधे ।

एतस्मिन्नन्तरे पार्वती उग्रं तपः समास्थाय, अनन्यधीः शिवं हृदयेन निदध्यौ । तदा तस्यास्तपसा तुष्टः शंभुः, भक्तिं परीक्षितुं मिलतया वृद्धवेषं दधानस्तदाश्रममाससाद । देव्या सखीजनैः सह अर्घ्यादिसपर्यया समुपचरितः सखीनां पुरतः पार्वतीमेव व्याजहार । "अयि बाले ? किमर्थं कठोरं तप आतिष्ठसे । रमणीयमिदं तव गात्रं तपसा क्लिश्नासि । एतत् तावकं तपो दृष्ट्वा ममापि व्यथितं मनः ॥" इति ॥ तदा, "चन्द्रकलाचूडं महादेवं कान्तमभिकाङ्क्षन्तीयं पर्वतकुमारी तपस्यती"ति सख्यौ वाचमूचिरे ॥

तदा स वृद्धः तत्कौतुकमसहमान इव शिवं निन्दितुमारेभे—"अहो ! कथमेष आस्थीयते बालिशयाऽनया । नीलोत्पलाक्षीयं कन्यका क्व ? विरूपाक्षो भूतनाथः क्व ? । यत्नादन्विष्यमाणोऽपि कश्चन गुणः तस्मिन् न दृश्यते ।

परं च, श्मशाननिलयो विषधरभूषणो दिगम्बरः विगतव्रीडो जटाधारी नीलकण्ठः भिक्षुकः विषमाक्षः भूतिदिग्धोऽयम् सौधनिलयोचितया, दिव्यभूषणया दिव्यवसनया व्रीडाभूषणया कुन्तलमनोहरया कम्बुकण्ठ्या सर्वमंगलया समाख्या त्वया कथं व्रियेत ?

"भो यशस्विनि ! सर्वलोकमखोऽहं तवानुरूपो वरः । अतो मां वरय । यद्यत् त्वं वाञ्छसि तत्तत् सत्वरमेव साधयामि । भूतपतिं मत्तो गुणाधिकं न मन्येथाः ।" इति समाभाष्य मौनमभजत ।

एवमस्तुद तस्य वचः श्रुत्वा रोषकषायितलोचना पर्वतराजकुमारी वाचमेव व्याजहार ॥ "यस्याद्यन्तौ वेधसा विष्णुना च न विज्ञायेते' तस्य परमेशितुर्महिमा त्वया कथं ज्ञातुं पार्यते ? सर्वे वेदा यमेव परमं पुरुषं समामनन्ति । वाङ्मनसागोचरं तमवगन्तुं त्वं कथं शक्नोषि ? ये च श्मशाननिलयादिदोषास्त्वया प्रोक्ताः, ते च सम्यग्विमृष्टाः परमात्मनः समुत्कर्षमेव विवृण्वन्ति । अतोऽनुचितमेवंविधं वचः; पुनरपि मा भण । त्वं वृद्धोऽसीति मर्षयामि ।" इति ॥ तदनु सखीमवोचत्, तपोविघ्नमिमं प्रदेशं त्यक्त्वा, प्रदेशान्तरं जिगमिषामि । को नु खलु प्रवेशः भगवन्निन्दाश्रवणदोषतूलदावानलः शाम्भवगणैरभिष्टुतःसत्वरमन्विष्यताम् ।" इत्युक्त्वा, वृद्धस्य पुरतः स्थातुमक्षमा, भगवन्तमेव हृदयगुहाधिकरणमादध्यौ ॥

तदनुक्षणमेव प्रसन्नो भगवान् स्मयमानमुखाम्बुजः, चिन्तितोत्तरक्षणमेव समागतस्य वृषभस्य ककुत्प्रान्ते समारूढः षोडशवयस्कः भस्मदिग्धतनुः चन्द्रकलाचूडामणिः धौतवासाः तस्याः पर्वतकुमार्याः नयनारविन्दयोः किमपि कामनीयकमादधानः प्रादुरास । सा च गिरिजा हर्षोत्फुल्ललोचना रोमाञ्चिततनुः क्षणमात्रं कर्तव्यमजानती तस्थौ ॥ परमेश्वरस्तु तामुमामभिनन्दनीयया वाचा प्रोत्साहयन् एवं व्याजहार । 'भो पर्वताधिराजतनये ! बाल्याननुगुणेन तव कठोरेण तपसा क्रीतोऽहमद्यप्रभृति त्वद्वशवदो भवामि । ईप्सितं वरं वृणीष्व । त्वदाशयविज्ञानाय केवलं वृद्धवेषेण मया श्मशाननिलयतादयो दोषाः उद्घाटिताः । देवास्तवाशयः सङ्कल्पितान्न व्यभिचरति । अतो मा भवादन्य मा शङ्केथाः ।' इति ॥

तदनुक्षणमानन्दबाष्पविसरमाविर्भवन्तमन्तर्यितुमशक्नुवाना कथमपि निगृह्य साष्टांगपातं प्रणम्योत्थाय कृतांजलिपुटा—'भगवन्! भगवद्भक्ता मां प्रसाद्यां यदि मन्यसे, तर्हि, मत्पितृभ्यामनुज्ञातो यथाविधि पाणिं गृहीतुमभ्यर्थये' इति कन्याजनोचितया वाचाऽधोमुखी व्याहृत्य मौनमास्थिता ॥

भगवांश्च तथैवास्त्विति संश्रुत्य, तत्रादन्तर्हितः स्वावासमासाद्य, ज्योतिर्मयान् सप्तर्षीन् सस्मार। तदनुक्षणमेव च समागत्य चरणारविन्दयोः प्रणिपत्य साञ्जलिबंधं भगवदाशयमभिज्ञातुकामान् सारुंधतीकान् सप्तर्षीनेव वक्तुमुपचक्रमे। 'भो मुनीन्द्राः! विदितमेव स्यात् भवता वक्ष्यमाणं मम वचः। अथापि दार्ढ्यार्थं भणामि। पर्वतराजकुमारी कठोरेण तपसा पुष्पचापदाहकमपि मां जिगाय। सा च—'यथाविधि पाणिग्रहणं कार्यमि'ति मयि वरमवृणीत।

अमराश्च शूरपद्मादिपीडिताः—मदीयकुमारेण तन्नाशः कार्यं इति प्रार्थयन्ति। अतः पार्वतीपरिणयाय तुषाराचलमासाद्य, उद्वाहनिर्णयं कृत्वा, सत्वरं समागच्छन्तु भवन्तः" इति। ते च भगवदाज्ञां शिरसा प्रतिगृह्य तत्क्षणादेव गिरिराजं प्राप्य, तेन यथार्हं सभाजिताः—'परमेश्वरस्य भार्यात्वे तव कुमारीं समुचितां सभाव्य, स्वाशयमाविष्कर्तुमागता वयमि'ति जगदुः। हिमवांस्तु परमं सन्तोषमवाप्य,—'भाग्यवानस्मि संवृत्तः, अचिन्तितोऽप्यर्थः दैववशादुपैति। तथैवास्तु' इति सप्रश्रयं जगाद। ते च सप्तर्षयः—साधु साध्विति तं प्रशशंसुः।

पर्वतराजमहिषी मेना च अरुंधत्या लोकपूजितया निवेदिताशया पत्युर्भावमनुसृत्य स्वयमपि तुतोष।

इदं हि सतीलक्षणं यत्पुरुषचित्तानुसरणम्।

तदनु सर्वतन्त्रप्रवर्तकाः सप्तर्षयः पर्वतराजेन सह समालोच्य श्वः उत्तरफल्गुन्योः जामित्रसंशुद्धे राशौ चन्द्रकलावतंसाय पार्वती देयेति मुहूर्तं निरचिन्वन्। सप्तर्षयश्च—'उद्वाहार्थं यत्नमाचरे'ति हिमाद्रिमादिश्य, तदनुमतिमासाद्य, देवदेवसकाशमागत्य, प्रणिपत्य, कल्याणमुहूर्तं प्रास्ताविषुः।

पर्वतराजश्च पार्वतीपरिणयार्थं विचित्रसौधान्, विविधोद्यानानि, रमणीयमणिमण्डपानि स्वच्छाच्छतोयरमणीयानि सरांसि, विशेषतः सर्वालंकारमण्डितं विवाहमण्डपं च त्वष्ट्रा कारयामास। स्वयं च परितुष्टान्तरः———

"आहूय दीयते कन्या विवाहे ब्राह्म इत्यतः" महादेवान्तिकमासाद्य, साष्टांगपातं प्रणम्य, 'भगवन्! ओषधिप्रस्थमेत्य मम कन्यां पाणौ परिगृह्य

कृतार्थं तु मामि'ति प्रार्थयामास । भगवांश्च, ओमिति प्रतिश्रुत्य प्रसन्नमानसो महीधराय उत्तरकार्यकरणे अनुमतिं चकार ।

परमेश्वराज्ञाकिङ्करो भगवान् नन्दी, विबुधान्मुनीनन्यांश्च शम्भुकल्याणार्थं समाजुहाव ।

समाहूताश्च ते विबुधादयो नानोपायनपाणयः प्रस्थाय, परमेश्वरप्रसाद-मभिकाङ्क्षन्तः, समागत्य प्रणिपेतुः । भगवांश्च तान्सभाजयित्वा, लोकसम्मोहनं रूपमास्थाय, प्रस्थातुकामोऽभूत् । तदिङ्गितमवगत्य सज्जीभूतं, कैलासोपमं वृषभ-मारुह्य 'जय जय महादेवे' त्यादिमङ्गलध्वनिमुद्घोषयद्भिः प्रमथैः, विबुधादि-भिश्च प्रस्थाय, हिमाचलमाजगाम ।

देवतात्मा हिमवांश्च बन्धुवर्गसमन्वितः प्रत्युद्गम्य देवदेवं, प्रणम्य, ओषधि प्रस्थं प्रावेशयत् । विचित्रालङ्कारसम्भृतां राजवीथिं च समुल्लङ्घ्य, महदुन्नतमतुलं भवनं च प्रावेशयत् । राजमहिषी मेना च विधिवत् परमेश्वरं सम्पूज्य, परमानन्द-भरिता बभूव । सर्वैरमरगणैरावृतो भगवांश्च, दिव्यमङ्गलनिर्घोषैरनुरणितमन्त-रालयमासाद्य, नयनासेचनके कल्याणमण्डपे भासमानं नवरत्नखचितं सिंहासन-मलचकार । तदा हिमवान् मेनया सह विधिवत् भक्त्या वस्त्राभरणपुष्पादिसमर्हणैः परमेश्वरं सम्पूज्य, अलङ्कृतां गौरीं गिरिश इति समानीय, सचक्रं धारापूर्वं परमे-श्वराय प्रददौ । देवदेवोऽपि स्वपाणिना देव्याः पाणिं जग्राह । देव्या सह एका-सिकामास्थायातितरां शुशुभे । ब्रह्मणा चर्त्विजा अग्निकार्यं च विधिवदकारयत् ।

तस्मिन्नवसरे जगन्मातरौ तावुभावपि परस्परं तिरश्चीनदृशा पश्यन्तौ, किञ्चिदिव जातलज्जौ बभूवतुः । तादृशमवसरमभिज्ञाय, कन्दर्पगृहिणी स्वा-भिलषितसिद्धिमभिकाङ्क्षन्ती, आदिदम्पत्योः कल्याणमभिनन्दन्ती भगवत्निकटे स्वकान्तस्योज्जीवनं प्रार्थयामास । भगवांश्च प्रसन्नस्वान्तः—'नेत्रदृशा तव कान्तोऽनङ्गोऽस्तु । तव तु अङ्गो भातु' इति अनुगृह्य, सुमङ्गलां कामपत्नीं यश-स्विनीं पूर्णकामामकरोत् । प्रमथादयश्शिवभक्ताः कल्याणसम्भ्रममनुभूय परमा-नन्दमवापुः । भगवांश्च परिणयावसाने मेनाजानिमापृच्छ्य, दिवौकसश्च यथा-नुगुणं सभाजयित्वा, स्वस्वलोकगमनायानुमतिं दत्त्वा, जगज्जनन्या सर्वमङ्गलया सह ककुद्मन्तमारूढः कैलासमाससाद । तत्र च, दिव्यसुन्दररूपया नवोढया पार्वत्या विविधकल्पतरुपरिमण्डितेषु उद्यानेषु, बहुविधरत्नखचितेषु प्रासादेषु चारमत । एवं गते बहुतिथे काले, पुनरपि शूरपद्मोपद्रुता निर्जराः सखीभूय, महादेवसकाशे

विज्ञापयितुकामाः कैलासमासाद्य, प्रणिपातपुरःसरं नन्दीशमभ्यर्च्य, परमेश्वर-दर्शनायावकाशं प्रार्थयामासुः।

तेषां प्रार्थनावशंवदो नन्दी देवदेवस्य समयं प्रतिपालयन्, अमृताशनान् भगवत्सन्निधिं प्रापयामास। तेऽपि भगवन्तं करुणाकरं समेत्य, हर्षकण्टकिततत्वचः प्रणम्य, 'शूरपद्मघातिनं कुमारमुत्पाद्य अस्माकीनं भयं निरसनीयमि'ति व्यजिज्ञपन्॥

तदा दयानिधिः श्रीकण्ठः षड्भिर्वदनैरलङ्कततनुः एकासनासीनामम्बिकां षड्भिराननैस्तैरपश्यत्। तदा ऊर्ध्वरेतसस्तस्य ललाटनेत्रेभ्यः कोटिसूर्यप्रभं कालाग्निसन्निभं किमपि तेजो निरगात्। तदुग्रं तेजो दृष्ट्वा भीतभीता देवाः सर्वतो-दिशः पलायमाना अपि अलब्धशरणाः तमेव कालकालं शरणं ययुः। ततः तत्स्मृतिमात्रेण तत्तेजः सूक्ष्मतां संप्राप्य, षोढा बभौ। परमेशितुः शासनात् वह्निवायू महता प्रयत्नेन तत्तेजः समादाय, गङ्गाप्रवाहे निचिक्षिपुः। गङ्गा च तत्सोढुमपारयन्ती शरवणमध्ये पद्मोपरि प्रसारयामास।

तत्र च तच्छाम्भवं महः षड्वक्त्रं, द्वादशभुजं, सुमनोहरं मङ्गलायनं जगन्मोहनं रूपमभवत्। यच्च बालभावतां गतमवलोक्य नूनं मारोऽपि कुत्सनीय-शोभ इति निश्चिक्युः॥

अतश्च कुमारनाम्ना षण्मुखः पप्रथे। तदा गगनात् पुष्पवृष्टिरभूत्। दिव्यदुन्दुभयो नेदुः। अप्सरसश्च ननृतुः। दिशश्च प्रसन्ना बभूवुः। गन्धवाहः मन्दं प्रववौ। अमृताशनानां मनांसि विमलान्यासन्। अमरपरिपन्थिनां तु हृदयं चकम्पे। निर्जराश्च कुमाररूपं पारमेश्वरं सुमनोहरं ज्योतिः समवेक्ष्य, कृतकृत्याः ववन्दिरे। परमानन्दकन्दलितस्वान्तः पीताम्बरः षट् कृत्तिकाः समाहूय, ताभिः कुमारं स्तन्यमपाययत्। ततः कुमारः कार्तिकेय इति लोकेषु अप्रथत। कुमारश्च तासामनुग्रहाय, षोढा मूर्तीः स्वीकृत्य, स्तन्यमपिबत्। अतिसुन्दरैः षड्भिः रूपैः पद्ममध्ये विजहार॥

यदा हरादुत्पन्नं तेजः तदा पार्वत्यपि ऐशमङ्कं परित्यज्य, निशान्ताभिमुखी ययौ। तदा स्खलितयोः तस्याः पादयोः मञ्जीरखचितानि नवरत्नानि मार्गपर्यन्ते गलितानि॥

समाहूतेषु, तद्रूपसमप्रभाः नवसुन्दर्यो जाताः। ताश्च प्रेम्णा परमेश्वरं समेत्य, सत्वरमेवापन्नसत्त्वा बभूवुः। हैमवती तु जातकोपा "मा प्रसूध्व"मिति ताः शशाप। ईशशासनात्तासु गिरिजां परिचरन्तीषु, देव्याः प्रसादेन तासां नाभ्याः नवकुमाराः सञ्जाताः।

महेश्वरश्च तेषां वीरोपपदानि, वीरबाहुः, वीरकेसरी, वीरमहेन्द्रः, वीरमहेश्वरः, वीरपुरन्दरः, वीरराक्षसः, वीरमार्तण्डः, वीरान्तकः, वीरधीरकः, इति नामानि चकार॥ ते च हृष्टपुष्टाः भवान्या सहितं भवं प्रणेमुः। शङ्करोऽपिताननुजग्राह। तदनु कुमारस्य दिदृक्षया गिरिजया सह वृषमारुह्य, प्रमथश्रेष्ठैः परिवारितः शरवणमवाप। तत्र चाम्बुजेषु बहुधा आसीनं अम्बुजप्रभं अतद्रितैर्मरुद्गणैर्मातृभिश्च सेव्यमानमात्मजं निरीक्ष्य, आत्मनस्त्रिनेत्रतायाः सफलतां मेने॥

पुत्रवत्सला देवी वृषात्सत्वरमवतीर्य सादरं षट् सुतान् समालिंग्य मुहुर्मुहुर्मूर्ध्न्युपाघ्राय, स्तनान्तरे गाढं कृत्वा एकीचकार। ततः द्विपादं द्वादशभुजं, षड्वक्त्रं द्वादशलोचनं च सपक्ष तं कुमारं सानन्दानुग्रहमपश्यत्। तदनुक्षणमेव, प्रस्नुतस्तनी स्तन्यमपाययत्। बालोऽपि अम्बिकाकस्य: षडाननैः पयः पीत्वा मातुरमितं प्रेम जनयामास।

तदनु जगज्जननी कुमारमादाय, वृषभोपरि स्थितं शङ्करमाससाद। तदा निलिम्पैः सवाद्यघोषं जय-शब्दः कृतः। शङ्करश्च सुरसन्निधि षण्मातॄः समेत्य, 'यतोऽयं बालः युष्माभिर्वर्धितः, ततः 'कार्तिकेय', इति भुवनत्रये विख्यातोऽयं कुमारः, युष्मद्दिनेषु व्रतमाचरतां सन्तानादिसमृद्धिं दास्यतीति वरं ददौ।

तदनु अम्बिकाजानिर्भुजाभ्यां कुमारमादाय अञ्जसा कैलासमासाद्य, स्फाटिकशृङ्गाये विबुधैर्महशुभावहं पुत्रस्य जन्मोत्सवमचीकरत्।

तदा पवनः सुखस्पर्शः प्रववौ।

ज्वलनो निर्धूमो ऽतितरामज्वलत्।

नद्यः प्रसन्नसलिला आवर्तमनोज्ञा आसन्, दश दिशोऽपि प्रसेदुः।

यमिनां हृदयपुण्डरीकं विललास।

खेचराः सिद्धचारणाः पुष्पवर्षाणि ववृषुः।

दिव्यदुन्दुभयोऽसुराश्रियं कम्पयन्तः नेदुः।

एवं कुमारजननोत्सवे सर्वं हृष्टमभूत्।

## नन्दभद्रोपाख्यानम् ।

द्वितीयोऽध्यायः ।

श्रीयुक्त चारुचन्द्र रायचतुधुरीणस्य

६४ वर्षीय १म खण्डस्य १६ पृष्ठतोऽनुवृत्तम् ।

बाल उवाच—

उक्तञ्च, "अविद्या वशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।

सा कारणशरीर स्यात् प्राज्ञस्तत्राभिमानवान् ॥" (पञ्चदशी)

रजस्तमोमलिनीकृत सत्त्वगुण एव अविद्या। तस्य वैचित्र्याद् अविशुद्धितारतम्याद् एव जीव अनेकधा अनेकप्रकारेण देवतिर्य्यङ्नरादिभेदेन विविधो भवति। सा अविद्या एव जीवाना कारणशरीर, स्थूलसूक्ष्मशरीरादिकारणभूत स्यात्। शुद्धसत्त्वगुणस्य रजस्तमसी एव द्वे मले। तन्मलिनतायास्तारतम्यञ्चेत् जीवानां देवतिर्य्यङ्नरादिभेदस्य कारण तदा शुद्धसत्त्वगुणस्य विशुद्धिसम्पादनं वा शुद्धसत्त्वगुणस्य उत्कर्षसाधनमेव वा सर्वेषां नराणा एकमात्र लक्ष्य भवेत्। लक्ष्यहीनं जीवन विफल। एतज्जीवनलक्ष्यं वैशद्येन निरूपयितु "सत्त्व रजस्तम" इति गुणत्रयस्य निर्म्मल ज्ञानमतीव प्रयोजनीयम्। अत आदौ गुणत्रयलक्षणानि वक्तुमिच्छामि।—

१। सत्त्वगुणलक्षणानि यथा'—

सत्त्वं नरं सुखे आसक्त करोति। सत्त्वं निर्म्मलत्वात् ज्ञानस्य प्रकाशका निरुपद्रव शान्तं देहिन सुखासक्तं ज्ञानासक्तञ्च करोति। यदि अस्मिन् देहे ज्ञान-प्रकाश उपजायते तदा सत्त्व विवृद्धं विद्यात्। सत्त्वे प्रवृद्धे यदि नरो मृत्युमाप्नोति तदा स ब्रह्मविदा प्रकाशमयान् लोकान् प्राप्नोति। सत्त्वगुण प्रीत्यात्मक'। शास्त्राभ्यास, ज्ञान, शौच, इन्द्रियनिग्रह., धर्म्मक्रिया, आत्मचिन्तन, सच्छ्रद्धा, क्षमा, धृति:, अनुकम्पा, लज्जा, शान्ति., सन्तोष, धर्म्मे प्रीति', एतानि सत्त्वलक्षणानि ॥

२। रजोगुणलक्षणानि यथा'—

रजोगुण नर कर्म्मणि आसक्त करोति। स अनुरागात्मक' तृष्णासङ्ग-समुद्भवश्च। लोभ', सकामकर्म्मकरणेच्छा, उद्यम, अनुपशम', विषयतृष्णा, स्पृहा, स्तम्भ, एतानि रजसि विवृद्धे सति जायन्ते। यदि नर रजसि विवृद्धे मृत्युमाप्नोति स कर्म्मासक्तेषु मनुष्येषु पुनर्जायते। राजसस्य कर्म्मण फल दु खम्।

३। तमोगुणलक्षणानि यथा —

तम ज्ञानमावृत्य नर प्रमादे सञ्जयति। तमः अज्ञानज सर्वदेहिना मोहनकारण प्रमादालस्यनिद्रासु आसक्ति जनयति। तमसि विवृद्ध सति नरस्य विवेकभ्रंश, अनुद्यम., कर्त्तव्यानुसन्धानराहित्य मिथ्याभिनिवेशश्च जायते। नरश्चेत् तमसि विवृद्धे मृत्युमाप्नोति स पुन पश्वादियोनिषु जायते। तमोगुण. मोहदो विषादकरश्च। आलस्य, अज्ञान, निद्रा, दैन्य, भय, विवाद, कार्पण्य, कौटिल्य, अतिनास्तिक्य, परदोषान्तदर्शनं, अन्याय-पूर्वक-धनार्ज्जन क्रूरता, याचकता, भ्रान्ति', तन्द्रा, एतैर्लक्षणैस्तमोगुणस्य प्रतीतिर्भवेत्। तामसी श्रद्धा परतापोपपादिका। अस्थिरचित्ताना नराणा किमपि कारण विना विवद-मानाना तथा ग्रामान्तर गन्तुकामाना अपि च अकारण किमपि कार्य्यं कुर्वाणाना तमो विवृद्धमिति ज्ञायते।

कर्म्म त्रिविधं पुण्य ( सत्त्वप्रधान ), पाप ( रजस्तम प्रधानं ), तयोर्मिश्रणञ्च ( त्रिगुणात्मक )। सर्व कर्म्म सत्त्व-रजस्तमोगुणत्रयात्मकम्। अस्माक प्रत्येक कर्म्मण' ( कायिक वाचिक-मानस-कर्म्मण ) सात्त्विकत्व, राजसत्व, तामसत्वञ्च कतिपयैरुदाहरणैर्बोधयितुमिच्छामि यथा '—

१। सात्त्विक कर्म्म—

निष्कामेण कर्त्रा नित्यतया विहितं आसक्तिरहित रागं द्वेषञ्च विहाय कृत यत् कर्म्म तत् सात्त्विकमुच्यते।

राजस कर्म्म—

फलाभिलाषिणा वा साहङ्कारेण बहुलायास यत् कर्म्म क्रियते तत् राजसम्।

तामस कर्म्म—

पश्चाद्भावि बन्धन नाश परपीडा स्वसामर्थ्यञ्च अपर्य्यालोच्य मोहात् यत् कर्म्म आरभ्यते तत्तामसम्।

२। सात्त्विक कर्त्ता—

आसक्तिरहित, अहमित्यभिमानशून्य', धृत्युत्साहसमन्वित', सिद्ध्यसिद्ध्यो' र्निर्विकार कर्त्ता सात्त्विक।

राजसः कर्त्ता—

विषयानुरागी, कर्म्मफलप्रेप्सु, लुब्ध, हिंसापर, अशुचि, हर्षशोकान्वित. कर्त्ता राजस।

तामस कर्त्ता—

अयुक्त, प्राकृत. (विवेकशून्य), स्तब्धः (अनम्र'), शठः, परापमानकारी, अलस', विषादी, दीर्घसूत्री च कर्त्ता तामस।

३। सात्त्विकी बुद्धि—

या बुद्धि प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये बन्ध मोक्षञ्च वेत्ति सा सात्त्विकी।

राजसी बुद्धि—

यया बुद्ध्या धर्म्ममधर्म्मञ्च, कार्य्यमकार्य्यञ्च यथावत् न प्रजानाति सा राजसी।

तामसी बुद्धिः—

या बुद्धि अधर्म्म धर्म्म इति मन्यते, सर्व्वार्थान् च विपरीतान् मन्यते तमसा आवृता सा बुद्धिस्तामसी।

४। सात्त्विक अहङ्कार—

यस्मात् अहङ्कारात् तपो, दान, तथा यज्ञ. प्रभवन्ति स सात्त्विकः।

राजस अहङ्कार—

यस्मात् अहङ्काराद् राज्य, आधिपत्य, ऐश्वर्य्यादिकञ्च जायते स राजस.।

तामसः अहङ्कारः—

यस्मात् अहङ्कारात् कलहो जायते स तामस.।

५। सात्त्विक सुख —

यत्र सुखे नर अभ्यासवशात् आनन्द लभते दु खान्तञ्च प्राप्नोति, यत्सुखमग्रे विषमिव परिणामे अमृतोपम आत्मबुद्धिप्रसादज तत्सुख सात्त्विक।

राजस सुख —

यत् सुख विषयेन्द्रियसयोगाद् अग्रे अमृतोपम परिणामे विषमिव तत्सुख राजस।

तामस सुख —

यत्सुख निद्रालस्यप्रमादोत्थं यद् अग्रे परिणामे च आत्मनः चित्तस्य मोहन तत् तामसं।

६। सात्त्विक दानम् —

प्रत्युपकारासमर्थाय पुण्यक्षेत्रे पुण्यकाले च तपःस्वाध्याय सम्पन्नाय पात्राय दातव्यमिति यत् दान दीयते तत् सात्त्विकम्।

राजस दानम्—

यत् प्रत्युपकारार्थं स्वर्गादिक फलमुद्दिश्य चित्तक्लेशयुक्त यथा तथा दीयते तत् दानं राजसम्।

तामस दानम्—

अपुण्यस्थाने अकाले अपात्रेभ्यः सत्कारशून्य सतिरस्कारं दानम्।

७। सात्त्विक आहार —

आयु-सत्त्व-बलारोगयसुख-प्रीतिविवर्द्धना रसवन्त स्नेहयुक्ताः स्थिरा हृद्या आहारा सात्त्विकप्रियाः।

राजस आहार —

कट्वम्ललवणात्युष्णतीक्ष्णरुक्ष-विदाहिनः दुःखशोकामयप्रदा आहारा राजसा।

तामस आहारः—

प्रेत्यावस्थाप्राप्त गतरसं दुर्गन्धि दिनान्तरपक्व उच्छिष्ट अमेध्य अभक्ष्य यत् भोज्य तत्तामसप्रिय।

८। सात्त्विक श्रवणम् —

वेद-वेदान्त-स्मृति पुराण-तन्त्रशास्त्रादिश्रवणं सात्त्विकम्।

राजस श्रवणम् :—

साहित्यनाटकादिश्रवण राजसम्।

तामस श्रवणम् .—

युद्धवार्त्ताश्रवण परदोषप्रकाशनश्रवण एवमादि तामसम्।

शास्त्रदर्शनाद् यदा सत्त्व प्रवृद्ध भवेत् तदा तामसार्थेषु वैराग्य जायते। तदा सत्त्व रजस्तमसो प्रसह्य अभिभवति। लोभयोगात् यदा रज: प्रवृद्ध भवेत् तदा रज: तम'सत्त्वे अभिभवति।

मोहयोगाद् यदा तम' प्रवृद्ध भवेत् तदा तत्सत्त्वरजसो मच्चोभ्य अभिभवति।

यदा सत्त्व प्रवृद्ध, तदा धर्म्मे मति. स्थिरा भवेत् रजस्तम समुद्भव बाह्यार्थं न चिन्तयेत् सत्त्वसमुद्भव अर्थं गृह्लाति अनायासकृत्यञ्च धर्म्म यत्नञ्च वाञ्छति। तदा सात्त्विकेषु भोगेषु काम कुरुते, राजसेषु च तामसेषु भोगेषु मोक्षार्थी कामं न कुरुते। एवं पूर्व रज जित्वा ततश्च तमसो जयो भवेत्। तदा सत्त्वं निर्म्मलं भवति।

यदा रज' प्रवृद्ध स्यात् तदा नर सनातनान् धर्म्मान् त्यक्त्वा परधर्म्मान् प्रति श्रद्धां कुरुते।

यदा तम विवृद्धं भवेत् तदा वेदे धर्म्मशास्त्रे च विश्वासो नैव भवेत् तदा तामसीं श्रद्धा प्राप्य नरो धनात्ययं करोति, सर्व्वत्र द्रोह कुरुते, शान्ति न अधिगच्छति। तदा सत्त्व रजश्चैव जित्वा क्रोधनो दुर्म्मति: शठो भूत्वा कामचारेण वर्त्तते।

य' सात्त्विक कर्म्म करोति स स्वर्गमाप्नोति स्वर्गात् कालपरिभ्रष्टो मर्त्त्ये मानवजन्म लब्ध्वा धनी, धर्म्मी, सुखी च भवेत्।

यस्तु तामस कर्म्म करोति स नरक गत्वा बह्वी यातना भुक्त्वा स्थावरत्व प्रतिपद्यते ततो महता कालयोगेन महता दर्शनस्पर्शे' भाग्यवशात् मानवजन्म लभेत। सोऽपि दु:खदारिद्र्याद्यै वेष्टितो विकलेन्द्रियो भवेत् सर्वनराणा पापस्य एतद्धि लक्षणम्।

शुभमिच्छता जनेन सदा सत्त्वं प्रकाशयितव्य, रज नियन्तव्य तमश्च सहर्त्तव्य। केवल सत्त्व क्वापि न विद्यते, केवल रजो न, केवलम्वा तमो न क्वापि विद्यते।

तानि सर्वाणि सदा मिलितानि तिष्ठन्ति। तानि अन्योऽन्याश्रयाणि अन्योऽन्य-मिथुनानि च।

त्रिगुणात्मिका माया ब्रह्मादिस्तम्बपर्यन्त-देवासुरादीन् स्थावरजङ्गमात्मकान् प्राणिन पुत्तलिकावत् नर्त्तयति। मायासमुद्भव गुणत्रय त्रिविधस्वभावविशिष्ट' यथा—शान्त, घोरं, मूढञ्च। अत सर्वदेहिना स्वभावोऽपि गुणत्रयानुसारत त्रिविध यथा—शान्त, घोर, मूढश्च। ब्रह्मा, विष्णु', रुद्रदेवश्च त्रिगुणाश्रय अन्येषा का कथा, तेऽपि कदा प्रीतियुक्ता कदा अप्रीतियुक्ता कदाचिच्च विषादयुक्ता भवन्ति। ब्रह्मा यदा सत्त्वस्थ तदा शान्त समाधियुक्तश्च, यदा स रजोगुणाधिक्ये तिष्ठति तदा स घोररूप' सर्वत्र अप्रीतियुक्तश्च यदा स तमोगुणाधिक्ये वर्त्तते तदा स सविषादो मूढश्च। माधवो यदा सत्त्वसंस्थित तिष्ठति तदा स शान्त', प्रीतियुक्त, ज्ञानसमन्वितश्च, यदा स रजोगुणाधिक्ये तिष्ठति तदा स अप्रीतियुक्त सर्वभूतानि प्रति घोररूपश्च भवति। यदा रुद्रो देव सत्त्वगुणाधिक्ये वर्त्तते तदा स प्रीतिमान् शान्तिमाश्च, यदा स रजोगुणाधिक्ये तिष्ठति तदा स प्रीतिविवर्ज्जितो घोररूपश्च भवति, स तमोगुणाधिक्यवशत मूढो विषादयुक्तश्च भवति। तेऽपि यतो गुणाधीना अन्येषा का कथा ?

सात्त्विकैर्बुद्ध्यादिभिर्देवत्व' राजसैर्मानवत्व तामसैश्च स्थाणुयोनिता भवेत्।

यथा कलाद (स्वर्णकार) कलादोना सुवर्ण शोधयेत् तथा रजस्तमश्चैव सात्त्विकैर्गुणै' संशोध्ये।

अनादिप्रकृतिभवाद् अस्मादेव गुणाना समवायात् प्राणिन' सुखिनो दु खिनश्चैव शास्त्रदर्शिनो भवन्ति।

ईश्वरो गुणानामेकैकं अष्टाविंशतिलक्षे व्यभजत् ता' चतुरशीतिलक्षा जीवयोनय। ते जीवा ईश्वरस्य मनस' प्रभवन्ति। ते सर्व्वे ईश्वराशा प्राकृतैर्गुणैर्मोहिता। ते जीवा यथैव ईश्वरकृताधिकार लभन्ते तथैव अन्नाना पयसाञ्चापि विषयेषु क्लेशान् प्राप्नुवन्ति। तेषा जीवाना मध्ये नरजन्म तत्त्वज्ञा: श्रेयसे वदन्ति यत-स्तत् शिवभावेन भावितम्।"

बालस्य बहूपदेशपूर्ण तद्वच: श्रुत्वा नन्दभद्र उवाच—"अहो! मम सर्व्व-सन्देहो निराकृत। अधुना एकस्मिन् विषये मम सन्देहविशेषोऽस्ति। ईश्वरः

मज्जदातारः, ये नरा देवता अर्चयन्ति, ता देवतास्तांस्तान् स्वभक्तान् नरान् कथं दु खेभ्यो न रक्षन्ति? केऽपि देवभक्ता कथं विशेषाद् दुःखमग्ना दृश्यन्ते? इति मे बुद्धिमुह्यति। भो बाल। त्वं वा किं मन्यसे?"

बाल उवाच—

देवभक्तो द्विविधो यथा—अशुचिश्च शुचिश्चैव। यो हि कर्म्मणा मनसा वाचा इष्टदेवे रत, स देवभक्त उच्यते। यदा नरोऽशुचिर्देवता: पूजयति तदा भूतानि आविशन्ति, न तत्क्षणात् लुह्यति। स तदा विमूढ सन् अकार्य्याणि निषेवते, तत' क्षिप्र विनश्यति, तत अशुचिर्देवता न पूजयेत्। यस्तु शुचि: सन् देवतामभ्यर्च्चयेत् तस्य चेदशुभ भवेत् तत् तस्य पूर्व्वकृताना कर्म्मणा फल व्यक्तमित्युच्यते।

अत पर कर्म्मफलमधिकृत्य किञ्चिद् ब्रवीमि।

इति द्वितीयोऽध्याय।

---

## ब्राह्मणीय-काण्डम्।

---

श्रीयुक्त विभूतीशचन्द्र शिरोमणे।

( १ )

पलालीग्रामवासी राममयभट्टाचार्य्यो धनार्ज्जनाय कलिकाताप्रवासी बभूव। एकदा स माता अस्वस्थेति पत्रिकामवाप। तत मातुरुत्कलित कलिकातात कर्म्मस्थानादवकाश गृहीत्वा गृह गन्तुकाम वाष्पयानेन वर्द्धमानमाजगाम। तत्र च मीनमेकमुपक्रीय पदव्रजेन भवनमभिगच्छन् प्रान्तरस्यान्तरे कलिग्राम-वासिना महेन्द्ररायेण सोऽवलोकित। अथ स तस्मिन् रुचिररुचौ मत्स्ये उपजातरुचि कौतुकप्रियतया ब्राह्मण प्रतार्य्य तमादातुकाम: कृतप्रणाम आत्मान विषण्णमिव दर्शयित्वोवाच—अहो पितृव्यदेव। अद्य गृहं गच्छसि?

गच्छ गच्छेति। ब्राह्मणस्तस्य तत् तादृश वचनमाकर्ण्य भृशमुद्विग्न प्राह—केन तात! एव ब्रूषे? मातुर्मे किमप्यनिष्ट जातं किम्? महेन्द्र:—"नहि नहि गृहं याहि गृह याहि, अहह इत्युवाच। राममयस्तस्य तद्वचनभङ्ग्या माता मृतेति निश्चित्य"हा हा माता मे मृता। अहो मन्दभाग्य मातृदर्शनेऽपि वञ्चित।" इत्येव रुदन् प्राह—तात! नात परमामिषकर यास्यामि। तत् त्वमेवैन मत्करमादत्स्वेति दत्त्वा सत्वर यातुमारेभे। महेन्द्रोऽपि—"ब्राह्मणस्य वस्तुग्रहणमनुचितम्, किन्त्वेवंविधे काले का गतिरिति गृहीत्वा गृह गत:"।

( २ )

अथ राममय स्वभवनप्राङ्गणमागत्य "क्वासि जननि! क्वासि मे स्नेहमयि!" इत्युक्त्वा भूमिपतितो मातृशोकेनाकुल उच्चैरोदितु प्रवृत्त। तज्जननी च पुत्रस्वरमाकर्ण्य गृहाद् बहिरागत्य तादृश रोदनप्रवृत्त पुत्र विलोक्य स्नेहाकुला "केन जात! रोदिषि? मा तात! रुद्यता, एषाह जीवामी"त्येव सान्त्वयन्ती तच्छिर करमार्जित चकार। राममय मातर सुस्थतरा निरीक्ष्य शान्तिनिश्वासं परित्यजन् चिन्तयत्—अहो, तेनानपत्यापुत्रेण भृशमह वञ्चितोऽस्मि। स पुनरन्येद्यु: मामभिवीक्ष्य यमुपहास करिष्यति, स मे नितान्तमसहनीयो भविष्यति। तत् किं करोमि। केनास्य प्रतिशोधो गृहीतो भवेत्। भवतु, स यथा एवं विधात्कर्मणा सकर्णमहं विरमति तथा मया कार्य्यम्। एव विमृशतस्तस्य मानसपटे महेन्द्ररायस्य स्वसु सुशीलाया' श्वशुरालयो न्यासग्राम समुदितो बभूव। सुशीलाया भर्त्ता विमलकान्तिसामन्त: विवाहयौतुक मनोमत न जातमिति श्यालकाय क्रुद्ध भ्रातृभवनगमनात् पत्नी निषिद्धवान्। साऽपि चिरान्मातृमुखमपश्यन्ती नितरा दुःखिताऽऽसीत्। एतदथ महेन्द्रस्य माताऽपि भवनमागतस्य यस्य कस्याप्यन्तिके बहुधाभियोग कृतवती। परमेतावन्ति दिनानि सुशीलाया जनकालयागमनस्य कोऽप्युपायो नाभवत्। कोऽपि तस्य-च्छ्वशुरस्योग्र कोप शमयितु समर्थो नासीत्। किन्त्वद्यैष ब्राह्मण एकेनैव लोष्ट्रेण द्वयो पक्षिणो: प्राणसहार विधास्य इति किङ्करमेकमाहूय तस्य हस्ते पत्रिका-मेका प्रदाय एवमेव वाच्यमित्युपदिश्य त न्यासग्राममभिप्रेषयामास। दिन-शेषे च स्वग्रामनिवासिनं महेन्द्ररायस्य भगिनीसूनुं हरिहरनामानमाहूयाब्रवीत्—

भद्र हरिहर! तव मातुलोऽद्य वर्द्धमानादागच्छतो मे नयनातिथि सञ्जातः। स त्वामादिशत्। तस्य भवने श्वो ब्राह्मणभोजन भविता। तत् त्वयाद्य केनापि ब्राह्मणेनास्मद्ग्रामीणा ब्राह्मणा निमन्त्रयितव्याः, श्वो मध्याह्ने गा दुग्धा दुग्धं, कदलीपत्राणि च गृहीत्वा तद्गृहमवश्य गन्तव्यञ्च। हरिहरोऽपि यथा ज्ञापयसीत्युक्त्वा सादर तं प्रणिपत्य स्वभवन प्रत्यगात्। तत स विप्रोऽपि तस्मिन्नेवापराह्णे कलिग्राम जगाम।

( २ )

अथ परेद्युः हरिहरो दुग्धादिक द्रव्यजातमादाय मध्याह्नसमये मातुलभवनमाससाद। मध्याह्नसमये त तदवस्थमागतमालोक्य महेन्द्र प्राह—केन तात! अस्मिन् मध्याह्नसमये सहसाऽऽगतोऽसि? केन वा बहुक्लेशेन कदलीपत्रादिकमानीतवानसि? तस्येदृशं वचनमाकर्ण्य हरिहर सविस्मयमवदत् न किमद्य भवद्भवने ब्राह्मणभोजनम? मया पुन रामभयब्राह्मणस्य वचनात् पलाशीवासिनः सर्व्व एव ब्राह्मणा निमन्त्रिता। तत्किं ~~केन~~ ब्राह्मणेन मृषोदितम्? अहो एतदतीव गर्हितम्। महेन्द्रोऽब्रवीत् अहो सर्व्वनाशः संवृत्तः। तात! नास्त्यत्र तस्य ब्राह्मणस्य दोष। मयैव गर्हितमाचरितम्। मत्कृतप्रतारणाया प्रतिशोधाय तेनैवमनुष्ठितम। किन्त्वस्मिन् मध्याह्नसमये ब्राह्मणाना मध्याह्नभोजनस्य व्यवस्था कथ भवितुमर्हति। ब्राह्मणाश्च ग्रामान्तरादागत्यास्मद्भवनादनशना यास्यन्ति। तत् किमधुना विधास्ये?। तात! जानासि? साम्प्रत स ब्राह्मणः क्वास्ते। हरिहर प्राह, स ह्यः इममेव ग्राम सम्प्राप्त इति श्रुत मया।

वत्स! आशु तमन्विष्यानय इति तस्यान्वेषणाय महेन्द्र भागिनेयं प्रेषयामास।

तत एकैकशो निमन्त्रिता ब्राह्मणाः समाजग्मु। स तान् बहुमानपुरःसर पाद्यासनादिभिरर्चयामास। परं हृदय तस्य मुषलेनाभिहन्यमानस्य उदूखलस्य दशामियाय। ततो हरिहरपुरःसर समायात राममय रहसि समाहूय तच्चरणयोर्निपतित स प्राह—तात! रक्ष मा, समयेऽस्मिन् यद् युक्त, तद् विधेहि त्वदृते विपदोऽस्या नास्ति समाधानम्। तदधुना किं करोमि तदुच्यताम्।

राममयो विहस्य साटोपमाह—पुनर्ब्राह्मणस्य मत्सरमत्सरसि ?।

महेन्द्रः। "एषोऽहं सकर्णमहं ब्रवीमि। ईदृशोऽन्यायो न पुनर्भविष्यति। इति कर्णावमर्द्दयत्। राममयः "जेतार्वातिष्ठस्व। सम्मान' सम्मानिनस्तवाच्चयो भवतु। अभय ते प्रदीयते। माऽस्तु ते भय। ब्राह्मणान् निमन्त्र्य न मया निर्मन्त्रेन स्थीयते। अतीतदिवस एवाचागत्य भोज्यादिकं सर्व्वमेव प्रस्तूय सज्जीकृत्य रक्षितमित्युक्त्वा सर्व्वमन्यदीयभवने निभृत प्रस्तुत द्रव्यजातमानीय ब्राह्मणान् भोजयितु प्रवृत्त'।

एतस्मिन्नेव समये तत्र शकटमेक समायातम, ततोऽवतरन्ती काचिद् युवति' "मात! क्व गतासि? अभागिन्यै दर्शन देहि, बहुदिनादागता तनया प्रेक्षस्व इति भूलुण्ठिताऽरोदीत्, विषण्णवदनो युवकश्चावतरन्नेकान्ते दण्डायमानोऽतिष्ठत्।

राममयस्तयोरागमनमुत्प्रेक्षमाणः सोत्कण्ठोऽतिष्ठत्, अधुना तावागताव-भिवीक्ष्य सिद्रमङ्गल्य सहर्षञ्चोवाच—अयि सभर्त्तृका सुशीला समायाता। एहि कल्याणि' एहि मा रोदीर्मारोदीर्मात। माता कस्यापि न चिर जीवति। समारस्यैष एव सनातनो नियम। अद्य माता ते मृता, श्वश्व ते श्वश्रूर्भर्त्ता, तदलं रोदनेन। तात विमल एहि पुत्र' एह्येहि, श्वश्रूस्ते त्रिरात्रश्राद्धे, ब्राह्मण-भोजनस्यायोजन विविध विधेहि।

महेन्द्रः। "एहि विमल! एहि भ्रात' सुशीले' भगिनि! मा रोदी', माता न मृता, परमेतस्य ब्राह्मणस्यैषा कीर्त्तिरिति सर्व्व वृत्तान्त कथयामास। विमलोऽभिदधौ "तादृशी पत्रिका प्राप्य गृहे स्थातु कथं शक्यते? तत एव सत्वरमागतावावाम्। महेन्द्रो हसन्त राममय निरीक्ष्य धन्योऽसि पितृव्यदेव' सुनिपुणया बुद्ध्या मां विजितवानसि। एष पराजयो मा समधिकमानन्दयति। भ्रातुर्विमलस्य रोषसमुद्रोऽनेन ब्राह्मणेन सहसा निपीतो वय पुनारत्नभाजः सञ्जाता'। विषमिव कष्टमस्य शिवेनेवानेन निपीत वयं पुनरमृतादना अभूम। अम्ब! अम्ब' त्वरितमेहि। सद्गुरुककरुणया भक्त्या सह प्रेमेवास्य ब्राह्मणस्या-नुकम्पया सुशीलया सहैष विमल समायात'।

ततः प्रहृष्टतमा महेन्द्रस्य जननी सहसागत्य दुहितरमुरस्यानीयानन्दाश्रूण्य-मुञ्चत्। सुशीलाऽपि अम्ब' दिष्ट्या त्वा पुनः पश्यामीत्युक्त्वाऽजस्राण्यश्रूणि

विससर्ज्ज,ततो महेन्द्रस्य जननी जामाता दुहिता च समं राममर्य्यं प्रणनाम। रामस्य सकौतुकं प्राह आर्य्ये। छिद्रितं भग्नं वा पैत्तलकुम्भमेकं मे पारितोषिकं प्रयच्छ शिरस्त्राणं विधाय यामि वस्त्रखण्डमेकञ्चेति। ऋजुबुद्धिः साऽपि वृद्धा कौतुकं कर्त्तुमिच्छती सत्यमेव पट्टवस्त्रमेकमेकं पैत्तलकुम्भञ्चानीय सादरं प्रणत्य तस्मै प्रादात्। सोऽपि सवस्त्रं तमादाय उच्चैरघोषयत् भो भोः पश्यत महेन्द्र-नाथस्य मातृश्राद्धे ब्राह्मणपण्डितविदायो भवतीति सर्व्वेभ्यो भङ्गिपूर्व्वकमदर्शयत्। सर्व्वे तमानन्दोत्सवं दृष्ट्वा सर्व्वं वृत्तान्तं श्रुत्वा च जयोल्लासं चक्रुश्च

साधवः सर्व्वदा सेव्या साधवः सुहृदः सदा।
अभिशापोऽपि साधूनां ह्यमृतत्वाय कल्पते॥

समाप्तम्।

# परमपूज्यपाद मदीयाध्यापक-भारतविख्यात पण्डितप्रवर-महामहोपाध्याय-श्रीयुक्त-श्रीकृष्णचरण-तर्कालङ्कार-चरणस्य महामहोपाध्यायोपाधिप्राप्त्युपलक्ष्ये तदीयपूजानिमित्तं कतिपयकविता-कुसुमाञ्जलिप्रदानम् ।

श्रीभल्लातकडि-काव्यस्मृतितीर्थस्य ।

( १ )

श्रीमान् सम्राट् गुणिगणगणिप्रीतिमान् प्रीतिपूर्वं
दत्त्वा तुभ्यं द्विगुणितमहोपाधिरत्नं महार्घं ।
जीतिं सद्यो जगति परमं साधुवादस्य पात्रं
सर्वः कीर्त्तिं व्रजति हि परां पूज्यपूजाप्रसक्तः ॥

( २ )

हृद्भावोऽयं विलसति धराधीश्वरस्याऽत्र मन्ये—
यत्ते भूषाविलसनमिता भातु सञ्ज्ञा क्षमायाम् ।
नालं भूषा तव तु भवितुं रत्नभूतोऽप्ययं स्यात्
यत्ते नाम्नः प्रथमपदवीं प्राप्य भूषान्वितोऽभूत् ॥

( ३ )

यस्त्वं विद्याध्ययनसमये संसृतेः क्लेशजालं
भुञ्जानोऽपि प्रतिपदमलं पाल्यबाहुल्यजन्यम् ।
यं यं यत्नं श्रित इह गुरो ! प्राप्तवाणीप्रसादः—
स्वादर्शः सन् विलससि परः सोऽपि दृष्टान्त एव ॥

( ४ )

विद्यावादे सति च समितौ पण्डितानां विजेता
आबाल्यं त्वं विबुधविदितः शुद्धबुद्धिस्वभावात्।
लब्धा ख्याति क्षितिपरिचिता क्षिप्तकुन्देन्दुकान्ति
प्राप्तश्चेत्थं सुरपतिगुरोर्गौरवं तुल्यरूपम्॥

( ५ )

नानादेशादुपगतमितो दीनविद्यार्थिवृन्दं
साध्वीं विद्यामधिगतरसा नित्यमध्याप्य यत्नात्।
इष्टं भोज्यं नियतमनघं भोजयित्वा निकामं
लब्धं यत् यत् सुविमलयशो भूषणं तत्तु सम्यक्॥

( ६ )

दीप्तं तेन क्षितितलमभूत् हीनकान्तिर्हिमांशु-
नैशं ध्वान्तं हरति स परं त्वद्यशः सर्वकालम्।
इत्थं लज्जाजनिततमसा नूनमेवंविधं स्यात्
को वा भातुं प्रभवति लघुं प्राप्ततुङ्गप्रसङ्गः॥

( ७ )

ज्योत्स्नायोगाद् ज्वलयति जगद् यामिनीजानिरेषः
पर्य्यायेण प्रशमितपरः पक्षमाश्रित्य पूर्वम्।
स्वाधीनं ते धवलयति तु क्ष्मातलं कीर्त्तिजालं
मन्ये खिन्नः खलु शशधरः शेषपक्षे प्रलुप्तः॥

( ८ )

त्वामासाद्य प्रणयिनमिव कान्तकल्पाख्यवृक्ष
विद्यावल्ली सुविपुलवपुः सूतकीर्त्तिप्रसूना
विद्वद्वृन्दं मधुपनिकरं मोहयन्ती निकामं
पुष्पैः कीर्णाः कलयति दिशोऽध्यापनावातनीताः

( ९ )

शास्त्रार्थेष्वप्रतिहतमतिः शुद्धसिद्धान्तवादी
सर्वत्रैवाप्रतिहतगतिर्वादिवृन्दं विजित्य।
अध्यारूढः प्रथमपदमध्यापनाया धराया
त्वं धीराणामुपमितिपदं प्राप्त इद्धप्रभाम् ॥

( १० )

विद्यादानाद् जनयसि पुनर्जन्मयोगं शिशूना
अज्ञानान्धान् नयसि कुपथात् सत्पथं सन्निदेशात्।
पापादुद्धारयसि विधिदः पापिसङ्घान् मुमुक्षुं
विद्याबन्धुस्त्वमसि जगतः सर्वशान्तिप्रदाता ॥

( ११ )

तव यशःकुसुमान्यधुना जनः—
भुवि ततान्यमितानि विलोकयन्।
विमलमाल्यसमूहविधित्सया—
तव गुणेन विगुम्फति सन्ततम् ॥

( १२ )

अथ विगुम्फ्य पुनः पुनरप्यदः
व्रतं समापयितुं न तु शक्नुवन्।
अतिरुषा क्षिपति क्षणदापतेः
निलय एव चिरं बहुवाहुभिः ॥

( १३ )

न यदि तत् किमिति क्षणदागमे
गगनमण्डलमेति विचित्रता।
किमिति वा हिमकान्तिरसौ तमः
समपहन्ति विना सहकारकम् ॥

( १४ )

पारे विद्यासमुद्रं विलसति तव धीर्या न कुण्ठा कदाचित्—
दोषं तस्याः स्वरूपं त्रिदशपतिगुरोर्भावनामादधानं ।
नाहं वक्तुं समर्थः किमनितरशिशुः सिन्धुपारं प्रयाति
तस्मात् चन्तव्यमेव तव गुणकथनं पूर्णचापल्यजन्यम् ॥

( १५ )

भगवान् भवदीयभावना नयतु न्यायत एव नन्दथुम् ।
अपि लब्धसुदीर्घजीवनः जगतः साधय शान्तिसन्ततिम् ॥

---

## मोहान्ताख्यसन्न्यासिनामाचारमधिकृत्य व्यवस्थापत्रं "वङ्गवासी"पत्रिकातः समुद्धृतम् ।

माननीयाशेषशास्त्राध्यापकपण्डितमहोदयानां सविधे वङ्गीयब्राह्मणसभा-सम्पादकप्रभृतीनां केषाञ्चित् निवेदनम् ।

तारकेश्वरप्रभृतितीर्थपरिचालकैः मोहान्तेतिप्रसिद्धैः पुरुषवरैः कीदृशमाचारजातं सेवनीयम् ? ते यदि तद् उल्लङ्घयेयुः तदा तान् प्रति कीदृशी व्यवस्था समीचीना ? अनयोः यथाशास्त्रमुत्तरं कृपया प्रदीयतामिति—

अस्योत्तरम् ।

तारकेश्वरप्रभृतितीर्थपरिचालकानां मोहान्तेतिप्रसिद्धानां गिरिपुरीवन्-प्रभृतिनामधारिणां शास्त्रोक्त—सन्न्यासधर्म्मावलम्बित्वम् अवश्यमपेक्षणीयम्। येषां मोहान्तेति प्रसिद्धानां सन्न्यासिनां सन्न्यासधर्म्मान्तर्गतस्य कस्यचिद् धर्म्मस्य प्रच्युतिः, ते तादृशतीर्थपरिचालकपदात् अवश्यमेव बहिष्करणीयाः ।

अत्र प्रमाणम्—

श्रीमच्छङ्कराचार्य्यशिष्यपरम्परासु दश नामानि, यथा—
तीर्थाश्रमवनारण्य-गिरिपर्व्वतसागराः ।
सरस्वती भारती च पुरीति दश कीर्त्तिताः ॥ इति

तेषां धर्म्मा यथा—

सदन्ने वा कदन्ने वा लोष्ट्रे वा काञ्चने तथा ।
समबुद्धिर्यस्य शश्वत् स सन्न्यासीति कीर्त्तितः ॥
दण्डं कमण्डलुं रक्तवस्त्रमात्रञ्च धारयेत् ।
नित्यं प्रवासो नैकत्र स सन्न्यासीति कीर्त्तितः ॥
न च पश्येत् मुखं स्त्रीणां न तिष्ठेत् तत्समीपतः ।
दारवीमपि योषाञ्च न स्पृशेद् यः स भिक्षुकः ॥

इत्यादयः ।

तद्धर्म्मप्रच्युतौ तु—

मञ्चकं शुक्लवस्त्रञ्च स्त्रीकथा लौल्यमेव च ।
दिवास्वापश्च यानञ्च यतीनां पतनानि षट् ॥ इति—

च्युतधर्म्माणां तेषां दण्डो यथा—

परिव्रज्यां गृहीत्वा तु यः स्वधर्म्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेत् ॥ इति—
आरूढो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥ इति

बहिस्तूभयथापि स्मृतेराचाराच्चेति ।

एतत्सूत्रस्य श्रीमच्छङ्कराचार्य्यकृतव्याख्यानम्—

"यद्यूर्द्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं यदि वा उपपातकमुभयथापि शिष्टैस्ते बहिष्कर्त्तव्याः" इति च । इति विदुषां परामर्शः ॥

महामहोपाध्याय—
श्रीकामाख्यानाथ तर्कवागीशशर्म्मणाम्
नवद्वीप-वास्तव्यानाम् ।
कलिकातावास्तव्य—महामहोपाध्याय-
श्रीकृष्णचरणतर्कालङ्कारशर्म्मणाम् ।

भट्टपल्लीय—
श्रीपञ्चाननतर्करत्न-
देवशर्म्मणाम् ।

— —

प्रोच्चण्डवैरिकुल-मुण्डविखण्डनेषु
काण्डेषु काण्डपरिताण्डवमण्डनाढ्या ।
ब्रह्माण्डभाण्डपरिपूरणतोऽपि नूनं
पूर्व्वानुगा जलनिधिप्रतिमा भवेद् या ॥

( ३१ )

सेय विभाति परिभूतविपक्षवर्ग-
प्रारम्भगर्वमिषुधिर्द्वितयीषुहासै ।
उत्साहमुन्नमयति प्रकृत मदीयं
वृष्टिर्यथा हि समये हृदय प्रवसु: ॥

( ३२ )

प्रक्षीणशक्तिरपि चास्मि तवेष्टसिद्धौ
भक्तिप्रसक्तिमवलम्ब्य करोमि चेष्टाम् ।
तत्राकृती नहि भवामि यथा तथा भो:
सिद्धे: प्रभावमपर परिभावयन्तु ॥

( ३३ )

किं वा ब्रवीमि ननु पावक पूतभाव
सम्भाव्यमीदृशमहो भवता प्रभावम् ।
यस्य प्रचण्डकरतापमवाप्य विश्वं
स्वल्पेन कुत्र लयमेति च वीक्षणेन ॥

( ३४ )

य: क्षोभित' पिवति नाम महाम्बुराशिं
तेजस्विनोऽपि न कदा परिभूतिमेति ।
सोऽप्यद्य मामगुरुमर्थयते गरीयान्
सर्व्वत्र नूनमदयो विधिरीदृशोऽस्ति ॥

( ३५ )

एवं प्रयुज्य विविध वचन स्रुतञ्च
पार्थः प्रणम्य हुतवाहमुपार्च्चयंश्च।
सर्व्वान् सुरेश्वरमुखान् हरितामधीशान्
भक्त्याभिवन्द्य च रथं विधिनोपतस्थे॥

( ३६ )

प्रह्लादफुल्लहृदयः पवनैकबन्धु-
स्तत्र स्मितेन विजयाय शुभाः प्रवाचः।
कृष्णार्ज्जुनौ प्रतियुयोज पुनर्विभासो-
मेघान्तरे विधुरिवाभ्रविभागयुग्मे॥

( ३७ )

हे वासुदेव तव हन्त विशुद्धमूर्त्तिः
किं वच्मि मङ्गलकथा प्रकृतेर्विरुद्धाम्।
यस्माद् भवानखिलशान्तिशुभप्रदाने
व्यस्तः समस्तविषये समता विभूनाम्॥

( ३८ )

यस्य प्रकाण्डभुजदण्डनखः प्रसह्य—
दीप्तासुरोरसि पद कठिनोन्नतेऽपि।
शैलोदरे पविरिव प्रविवेश पूर्व्वं
कि नाम शस्त्रमपरं कलयामि तेऽद्य॥

( ३९ )

मत्कृच्छसाधनधन तदपि प्रतीच्छन्
मांसा ग्रहीतुमपि नार्हसि साधुवृत्त।
—— कञ्चन विभास्वदकिञ्चनोऽपि
शस्त्रं सुदर्शनमिदं प्रददामि तुभ्यम्॥

( ४० )

ज्वालामयं किल सपत्नवनप्रदाह
तेजोऽभिभूतमततिग्ममयूखमालि
चक्रं तदेतदरिदाहपरं प्रसह्य
तत्पाणिपङ्कजदलोरुपदं प्रयातु ॥

( ४१ )

इत्थं निगद्य दहनो भगवांस्तदानीं
नाम्ना सुदर्शनमपोच्चणलोभनीयम् ।
तस्मै रथाङ्गमतुलं दनुजान्तकाय
प्रायच्छदच्छकिरणं रणचण्डकर्म्म ॥

( ४२ )

तेनाथ दैत्यकुलतापयिता मुरारि-
रासीत् पुरा खलु जगत्त्रयशत्रुहन्ता ।
तद्धाम नूतनमिवाप्य रराज भूयो
मध्यन्दिने दिनकरेण यथा विहायाः ॥

( ४३ )

हे पाण्डुनन्दन महापुरुषं सहायं
नित्यं जयस्त्वथ समेत्य तमेनमाद्यम् ।
यं वेदितुं मुनिजना नियमाभिषक्ता
भक्त्या महावनपदेषु तपश्चरन्ति ॥

( ४४ )

किं चित्रमत्र मम कृत्यसुसिद्धिबन्धे
तस्य प्रकाशकठिने तव साधुशक्तिः ।
सख्यानुबन्धविहितं परमं सहायं
प्राप्तोऽसि देवममरार्च्चितपादपद्मम् ॥

( ४५

तस्मादशेषशुभभाजनमेव वेद्मि
त्वां सत्यमन्यदुचितं किमिवास्ति सौम्य ।
तत्रापि वीरपदवीमनुसृत्य भद्रं
त्वत्तोत्तमाद्य मभिविन्दतु कीर्त्तिहारम् ॥

( ४६ )

आशीर्भिरेवमभिनन्द्य तदा क्रमानु
सूर्य्यप्रभानिकरभासुरमङ्गताभम् ।
ध्वान्तान्तकारिणमुपान्तवनैकभूमि-
र्नत्वा यथाक्रममसु रथमारुरोह ॥

( ४७ )

स प्राप्तवानपि रथं स्वमनोरथं वा
प्रीतिं पराञ्च फलसिद्धिनिमित्तभूताम् ।
इष्टक्रियोपकरणं सुकरोपपन्नं
प्रायः फलप्रभवमाहुरुदर्ककाले ॥

( ४८ )

अग्रे निधाय शिखिनं हरिरर्ज्जुनस्य
व्यक्तप्रचण्डतमशौर्य्यविशालबाहुः ।
यात्राप्रचेयशुभकार्य्यमिव प्रधार्य्य
तेनैव साकमनुरोऽत रथं प्रभेजे ॥

( ४९ )

तेषां वपूरुचिभिरारुणशुभ्रिकाभि-
श्चित्रीकृतो नयनवर्त्म विरोधिनीभिः ।
तात्कालिकीं श्रियमियाय शताङ्गवर्थ्यै.
सायं मरीचिभिरिवाशुमतोऽपरा द्यौः

( ५० )

तत्काय-सुन्दरकरोच्छ्वसितेव सद्यः
सम्मोदनिर्भरतया नु श्रताङ्गतन्वाः ।
कान्तिः ससार परितः किरती विलासं
शुद्धा मणेरिव शशिद्युतिनन्दितायाः ॥

( ५१ )

एवं प्रभासुरशिरोनिकरः प्रभाभि-
ससाश्वमण्डलस्रुताभिरिवारुणाभिः ।
तेषां प्रयाणकुतुकादिव सञ्चराय
स्वाभाविकीमगमदेष विधात्वशक्तिम् ॥

( ५२ )

सौवर्णकान्तिकमनीयतरे स्वगर्भे
प्राप्य प्रसङ्गमिलितान् हरिवह्निपार्थान् ।
वज्राग्निदीपित-महाजलभृद्विराजत्-
कुक्षोदरविदग्रगौरुचिं विजिग्ये ॥

( ५३ )

नानायुधावलिमयूखविकाशभिन्ना-
दैवप्रभावभवदीप्तिविभूतिदीर्घाः ।
चक्रुः प्रभा रथवरस्य विभातकाल-
लक्ष्मीभ्रमं सपदि दावतमोनिरासात् ॥

( ५४ )

दृष्ट्वा चण धनुरथेदमुपेन्द्रमित्रो
मित्रप्रताप उपजातकुतूहलेन ।
जग्राह यावदुपपीडितबाहुमुष्टि-
स्तावत्ससार रसनं किल किङ्किणीना ॥

( ५५ )

आसाद्य नाम सुचिरादवसादभङ्गं
शूराग्रपाणि-परिनोदनतो नतोऽपि ।
कर्त्तव्यसस्मरणभिन्नविलासनिद्र-
श्चापोध्वनिं स कृतवा खिल-किङ्किणीभिः ॥

( ५६ )

वामेन बाहुपुटकेन महीशपुत्रो
मुष्टीकृतेन सहसा सहसास्यबिम्बं ।
धृत्वाग्रकार्म्मुकमदो बलमात्मनीन
सम्पूर्णमाप किमिवाद्भुतदीप्रशक्तिः ॥

( ५७ )

नानाशुगावलिविपूरितदीप्रमध्यां
सत्पत्त्रचित्रकिरणास्ततमोविलासाम् ।
तूणद्वयीं विमलभासमिव प्रतिज्ञा
स्वीया बबन्ध स च पावकसन्निकर्षे ॥

( ५८ )

कर्म्मप्रसक्तिमनवाप्य चिराय यत्तु
निष्कर्म्मनाम पदमाप न कार्म्मुक तत् ।
पाण्डोः सुतेन कृतनोदनमानतिञ्च
सद्यो विनीतमिव मित्त्रमियाय तत्र ॥

( ५९ )

मौर्व्वीं चकर्ष च तदा ह्वहतीं कठोरा
मुर्व्वीविदारणपटुर्ध्वनिरध्वनीनान् ।
कर्णप्रकीर्णधमनिव्यथितान् प्रकुर्व्वन्
आशा व्यकम्पयदिवाध्वनि चामराणाम् ॥

( ६० )

तेजस्विना हरिसुतेन धनुर्गरीयः
कोटिद्वये गुणयुतं सपदि प्रचक्रे ।
आत्मीय-वाक्यविभवेन समं समस्य
प्रायः क्रियापरिणतिर्महता परोक्तिः ॥

( ६१ )

शब्दः ससर्प धनुषो बहुल' सदर्पः
प्रत्यब्दवर्त्म पवनेन कृतप्रनोदः ।
सख्युर्हिताय शिखिनो जयघोषणेन
किं नाम नाकपुरमप्यनुपूरयंस्व ॥

( ६२ )

हस्ते कृतोरुधनुषा तनयेन राज्ञो
दीव्यत्कृशानुकिरणच्छटया पुरस्तात् ।
देवेन्द्रचापरुचिरस्य महोल्कया च
कालाम्बुदस्य सदृशी समगामि लक्ष्मीः ॥

( ६३ )

प्रीतोऽथ विक्रमपरः परपक्षहन्ता
सख्युः सहायपदमत्र विधौ विधित्सु' ।
मुक्ताकलापकलितातिशय-प्रकाशं
स्वाङ्गत्विषा रथमलङ्कृतवान् रथाङ्गी ॥

( ६४ )

पवन-सारथिना परिणोदित
वहति य सदुपायचतुष्टयम् ।
हयकदम्बकमेव रथेन ते
तदनु तेन जयाय ययुर्द्रुतम् ॥

( ६५ )

अनुगुणविरुतानां पत्रिणां सुस्थितानां
श्रवणमधुरतार वासित धारयन्तः ।
तट-विटपि-समूहाः पुष्पकीर्त्योस्तयोर्वा
स्तुतिमिव.जययाने वन्दिवर्गाः प्रचक्रुः ॥

( ६६ )

सपदि तरुलतानां चारुचञ्चन्नतानां
किशलयरुचिराणां पुष्पमालाविकाशैः ।
सुभगविपिन-भूमिर्विभ्रम तत्र पौरम्
प्रति नवमिव भूयो मङ्गल सन्ततान ॥

( ६७ )

तातः सत्यपरो विभूतिरुचिरो विप्रो विनोदाभिधो
माता चानुगुणा पवित्रकुसुमाख्यानेन यस्यावनी ।
तस्य श्रीललितस्य मे सुमनसामानन्दवर्न्धे महा-
काव्ये खाण्डवदाहनेऽयमगमत्सर्गो हि वेदग्रमः ॥

———:०:———

## अथ पञ्चमः सर्गः ।

श्री नित्यादिगिरा देवी नीहारहारहारिणी
सा पातु पूतपादाब्भो-भवसम्भूतरेणुभिः ॥

( १ )

अथ रथो गुरुनेमि-भवैस्स्वर
क्षुभितवारिनिधि-प्रभवैरिव ।
ध्वनिभिरामुखरीकृतकानन-
स्त्रिदिवमद्विवसच्चयवद् ययौ ॥

( २ )

उभयतो भयतो वनसम्भवा-
स्वपलताप लतास्व तदा शनैः ।
सुपतता पतता शुभशाखिनः
कलरवैररवैभवमस्तुवत् ॥

( ३ )

रथजवेन विकम्पितविग्रहाः
शिथिलबन्धन-पुष्पततीः स्तदा ।
विससृजुस्तरवो नवसौरभाः
पुरसदो रसदोत्सवतो यथा ॥

( ४ )

विजयिनोरनयोर्गतिमङ्गलं
प्रतिविधित्सुरिव व्रततो-तति' ।
परिमलावहसूनसुहासिनी
सुमनसो मनसो मुमुचे मुदे ॥

( ५ )

तदरसम्भववात-विलालिताः
कुसुममालमनोरमविभ्रमाः ।
भ्रमितपल्लवचारुलता लता
भुवनपावनपादवरानिमान् ॥

( ६ )

जगदिद नियतं नियतात्मभि-
र्निखिलमात्मगुणै प्रतिपाल्यते ।
इति मतिप्रणयादिव-कौतुका-
दनुनता नु न ता विरता' पुन' ॥
( युग्मकम् )

( ७ )

सुललिता लतिका नवभाविता'
पुरयुवत्य इवानुगतोत्सवा' ।
मुकुलमधुप्रियकाकली-
रनुदिशं नु दिशन्ति तदा स्म वा ॥

( ८ )

रयरयभ्रमिताश्च पलाशिन'
शिखिहरीन्द्रभुवामति-दूरगा' ।
सविधमापुरतो जगदाश्रय—
पदपयोदपयोऽनुभवाय नु ॥

( ९ )

नतु चिराय तदीयरसायनं
स्वदितुमिष्टममी प्रभवोऽभवन् ।
स्मृतिना समयोपगत कृतं
फलति का लतिकाऽसमये भुवि ॥

( १० )

सर्पादि पृष्ठगता अतिदूरतो
विहगनादपरीततदाग्रहा: ।
द्रुतमतीत्य शताङ्गवर तदा
पुनरमी नरमीश्वरमन्वयु' ॥

( ११ )

कुसुमदामविलासितवल्लरीं
मृदुमरुच्चपला नवमञ्जरीं ।
कलरसे सरसा नलिनी तदा
ह्यमलिनामलिनामकरोद्गण: ॥

( १२ )

गुरुरथाङ्गभवे निनदे घन-
स्तनितविभ्रमतो भ्रमतोच्छ्रिखम् ।
शिखिगणेन शुभ परिकूजितं
वनदमानदमाङ्गनिरीक्षणात् ॥

( १३ )

वनभुवो मधुरैरिव तत्क्षणे
चतुरवर्हिरवे जयिनोस्तयो ।
हुतभुजा सह नाम कुलस्त्रिय'
सुगमना गमनायमुपाजगु: ॥

( १४ )

उपकृता:परमान्तरभक्तितो
वनमही परितोद्रुमवल्लिभि: ।
सुतरसा सरथ: खलु लङ्घयन्
सुमनसा मनसा नु दधौ व्यथाम् ॥

( १५ )

वनभुव तरसा च विदूरयन्
प्रचलितः सरथ स्वरसूचितः ।
अनुगुण-क्रमणेन नमस्वता
विरजसा रजसाऽपि न लङ्घितः ॥

( १६ )

तदनु कोऽपि मरुत्तदतिक्रमे
विगतसाहस एव तदाक्रमे ।
अपटुताञ्च निजां किल भर्त्सयन्
रुदितमादित माहिकपांशुभिः ॥

( १७ )

तरणिजा कलनादसमाकुला
कलयति स्म तदा रभसानयो ।
सुरहराज्जुनयोः प्रणयाच्छुभ
सकलह कलहसरवैरिव ॥

( १८ )

प्रकृतचारुगतिर्जलदच्छविः
सरवसारसमञ्जुलनूपुरा ।
उदितभङ्गभुजा किमु सा रसा-
दनुगतानुगतामनयोस्तदा ॥

( १९ )

तदपि तत्पदवीमनवाप्य किं
सरिदसौ तमसा मलिनीकृता ।
चिरवियोगकृशा रमणी यथा—
विहितदा हि तदापगतेक्षणात् ॥

( २० )

तटधराभरणायितमुच्चकै

कुसुमच्चरमुपान्तलतावले ।

सुरभित परिदृश्य तत पुन-

र्मुदमवादमवापुरमौ हृदि ॥

( २१ )

सुरभिभावमितामभित: स्फुट

तरुलतानिलयेषु सविभ्रमाम् ।

अभिनवा तरुणीमिव वीक्ष्य ता

मुमुदिरे मुदिरेक्षणतो नु तै ॥

( २२ )

ललितरागलसन्नवपल्लवा

कुसुमहासवतोर्लतिका स्तदा ।

प्रणयिवेशवधूरिव पश्यता

रतिरभूतिरभूद् हृदये तत ॥

( २३ )

वनमृगा रथवर्त्म विहाय तौ

सदहनौ दहनौ रिपुमर्हत: ।

दृढशुराद्य आशुतया गतै:

सुनयना नयनार्थमथाययु ॥

( २४ )

अथ नर्यक्षगताऽभवदेव या

सपदि वेगवशार्दति पातिता ।

हरिविलोचन-भावितलालसा-

मकृत सा कृतसाधुनिवेशनात् ॥

( २५ )

वनतमालपलाश-सुमालया
रचितरम्यवितान-विलासभाक् ।
वनमही तदुपस्थितिसम्मदाद्
महमिवाह्वमिवाश्रयमब्रवीत् ॥

( २६ )

सविधमाप जवेन रसेन या
महिरभूत्सहसा सहसेव सा ।
विरहमेभिरियाय तदा तु या
न विधुरा विधुरापि न साऽभवत् ॥

( २७ )

मदकलस्य विहङ्गकुलस्य च
प्रतिपद करुणैरिव कूजितैः ।
स्वहृदयाधिममोषु विहृण्वतो
तटविभाटविभा तमसा जिता ॥

( २८ )

रथरुचा चणमुल्लसिता पुनः
लघुतमोघटया परिभूयते ।
इति दशापरिणाममवेच्य ते
वनभुवो न भुवोऽपि मुद ययुः ॥

( २९ )

सकल-शाखिलता-रमणीयतां
नयनलोभकरीं परिदृश्य ते ।
अभिननन्दुरिदं जननीं वन—
प्रकृतिमाकृतिमानगुणाकरा ॥

( ३० )

विकचपाटलसौरभमोदिना
    नवसुनीलतृणोच्चयसन्ततिम् ।
परित आदधतास्तरणीमिवा-
    व्यथितमुत्थितमुद्ययुरध्वना ॥
( ३१ )

अतरुणारुणसत्तरुपल्लवा
    स्तरलयन् यमुनाम्बु तरङ्गयन् ।
कुसुमगुच्छलताः परिदोलयन्
    उपवनं पवनश्च ववौ पुर' ॥
( ३२ )

अनुपयोगमहोगतया नु तैः
    प्रतिरथाभिजिगीषुभरानुतै' ।
तदपि सयमिताल्पशुगन्धया
    विलसितालसितान्तसुगन्धया ॥
( ३३ )

नयनरञ्जनरागविचित्रया
    परिविसारितया तरुमालया ।
सहसयेव दिनान्तपरिष्क्रिया
    चतुरयातुरयाल्पतमिस्रया ॥
( ३४ )

प्रतिफलद्रथकाञ्चनकान्तिभि
    र्विरहिता गतया तटगोत्रया ।
अधिगतं किमिवाद्भुतदर्शनं
    सपदि वाप दिवापदमोद्गमम् ॥
विशेषकम् ।
( ३५ )

रथवरेण तथा जववत्तया
    प्रतिगुणं क्षणतस्तुतिपातिता ।
विटपिन परिमण्डलविभ्रमै
    प्रतिगदान्त गद स्म तदात्मनाम् ॥

( ३६ )

अनुयियासुतया कतिचिद् द्रुमा:
    पुनरशक्ततयेव निवर्त्तिता ;
तदरविभ्रमिता पतिता इवे
    क्षणपथ न पथश्च तदाभजन् ॥

( ३७ )

कतिपये महतां नु दिदृक्षया
    मतिमदीक्षणशक्तिनिराकृता ।
मुहुरहो भ्रममीयुरपोहिता
    प्रकृतित कृतित स्मयिनो यथा ॥

( ३८ )

सरलसालगणा: सहमा च ये
    नहि दृशा पथि सम्पतितास्तु ते ।
क्षणत ईक्षणमित्य पुरस्तत:
    कुजनभाजनभावगतिं ययु ॥

( ३९ )

स हि शताङ्गवर समतीत्य या-
    मतिरयेण गत सहसाऽपि सा ।
अवनिरुच्चलताच्च वियोगता
    न महसा महसादमियाय न ॥

( ४० )

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ।
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते ॥" इति ॥

सर्वेषां वस्तूनां त्रिगुणात्मकत्वम् । रजःकार्य्यं हिंसादिकं प्रागुक्तमेव । सत्त्वगुणप्रधाने सात्त्विके रजःस्थितिरेव गौणत्वेन वर्त्तते । तादृशं रजस्तत्-कार्य्यं हिंसा च स्वभावसात्त्विकैः परिहर्त्तव्यमवश्यमेवेति श्रुत्या मा हिंस्यात् सर्व-भूतानीति व्यवस्थापितम् । अतो लिङत्र स्वाभाविकसात्त्विकानां निवर्त्तनान्त-र्गतप्रसज्यप्रतिषेधविध्यर्थकमपि मन्तव्यम् । श्रुतिरियं सर्वैः प्रतिपाल्या विशेषतः स्वाभाविकसात्त्विकानां नात्र कोऽपि संशयावकाशः ॥

शिष्यः ।—गुरो ! ज्ञातं हिंसा न निर्धूतदोषेति । तथा सति न कदापि वैधेति विशेषणविशिष्ट—हिंसा साधारणतो यदृच्छातो वा पृथक् क्रियते प्राणि-हिंसायाः । ऋते वैधहिंसाया वैधमन्यत् किमपि भवितुमर्हत्येव । अधुना सम्यगुपलब्धं वैधहिंसापि हिंसाप्रकारविशेष इति । वैधहिंसायां प्राणिहत्यामात्रजन्यानिष्टमवैधे हिंसाऽवैधत्वजन्यञ्चेत्यनयोर्विभेदः । गुरो !"मा हिंस्यात् सर्वा भूतानीति" "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य-श्चे" ति श्रुत्यर्थानुपपत्तिरभिन्नविषयत्वाद् द्वयोरपि । अतः कथं मीमां-स्यमेतत् ?

गुरुः ।—वत्स ! साधूक्तं त्वया, यथाज्ञानं मीमांस्यते श्रूयताम् । "अहिंसन् सर्व-भूतान्यन्यत्र तीर्थेभ्य" इति श्रुतौ रजःप्रतिकूला तस्माद्रजःप्रधानस्य राजसिकस्य निवर्त्तनान्तर्गतप्रसज्यप्रतिषेधविधिः । पक्षान्तरे गौणरूपेण निवर्त्तनाचोदितप्रवर्त्तनाविधिरपि सम्भवति त्रिगुणात्मकत्वाद् वस्तुजातस्य जगतः । स्वभावतो हिंसावतां राजसिकानां व्यापकहिंसाविनिवृत्तये तथा तथ्येष्टफललाभार्थमुपदेशादस्य । नापि सम्भवति कश्चित् प्रत्यवायस्तेषां राजसानां वैधहिंसायां स्वभावनाशे स्वरूपनाशापत्तेश्च । परन्तु हिंसा-जनकरजःप्राबल्यात् सत्त्वगुणप्रधानस्य सात्त्विकस्य सत्त्वस्वरूपततिः सात्त्विकत्वानुपपत्तिर्वा । न तथा राजसिकानामित्यनया श्रुत्या प्रतिपा-

"सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्" ॥

"श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥"

अपिच मानवधर्म्मशास्त्रे—

"वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्म्मेण जीवन् हि सद्यः पतति जातितः ॥"

वत्स ! नेत्थं हिंसायाः सङ्कोचविधिः स्याद् यदि, तत् राजसैः स्वैरेणैवहिंसा सम्पादयिष्यते स्वभावधर्म्मत्वात् तेन सत्त्वगुणसापेक्षपरमपुरुषार्थस्तैरत्यन्त-दुर्लभोऽप्राप्यो वा स्यादिति मन्तव्यम् । अपिच वत्स ! सत्त्वप्रतिकूलरजः-कार्य्यं हिंसा न भवेत् कदाचिदेव रजःप्रतिकूलसत्त्वकार्यस्याहिंसाया उपादेय-विधिः । नहि हिंसालभ्य निःश्रेयसम् । सत्त्वोत्कर्ष एव पुरुषार्थसाधकः । तथ्यफलं हिंसादिरजःकार्य्यैलभ्यम् । अहिंसादिसत्त्वकार्य्यन्तु चित्तशुद्धिरूपाव्ययफलकमेव । चित्तशुद्धिरेव मुक्तेः प्रधानतम साधनम् । अतो वत्स! राजसाना समुन्नयनार्थमयं विधिर्वैधहिंसार्थको विहित एव कृपापरै र्वेदैस्तेषा सदातनयौभत्स्यहिंसाव्यापार-प्रशमनमनोभिः । सोऽयं विधिरपि प्रतिध्वन्यते श्रुति–मनु–पुराण–तन्त्र–शास्त्रै-र्बहुधा——

"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा" इत्यादिना ।
"देवोद्देश विना भद्रे हिंसा सर्वत्र वर्जयेत्" इत्यादिना ।
"विधिना परमेशानि यदि पूजादिकञ्चरेत्" इत्यादिना ।

अतो वत्स नास्ति कश्चिद्विरोधलेशो मूलतोऽनयोरापातविरुद्धत्वेन प्रतीय-मानयो"रहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यो" "मा हिंस्यात् सर्वा भूतानि" चेति श्रुत्योरभिन्नविषयत्वादधिकारिभेदाद्वा ।

शिष्यः ।–गुरो ! अस्तु तावदनयोः सामान्यविशेषभावः । यदुत्सर्गापवादयोरप-वादविधिर्बलीयानितिन्यायात् "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य" इति विशेषश्रुतिर्बलीयसीति मीमांसनीयम् ?

गुरुः ।–वत्स ! मैव तुल्यबलत्वादस्या वैधहिंसाया विधिनिषेधयोरधिकारिभे-दाच्च । विधिः सविशेषमादिमोल्लास उक्त एव, निषेधश्च व्याकरिष्यते पश्चात् । बलीयस्त्व मस्यसम्भविष्यति चेदत्र न विशेषप्राधान्यमपि

सामान्य स्यात्, यद्वा विशेषविधिर्न सर्वत्राबाधितो बलीयान् वा सामान्यविधेर्यतः क्वचिदुत्सर्गस्यापि समावेश इति न्यायाद्देशकालपात्रा-नुरोधाच्च। अतः प्रागुक्तमेवाधिकारिणा सदोषोऽपि स्वधर्म्मोऽनुष्ठातव्य-स्तथाच—

"स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः"

इति भगवद्वाक्यस्मरणादपि।

शिष्यः।—सम्यगुपलब्धमेव नानयोः सामान्यविशेषभावस्तथा सत्यपि नात्र विशेषभावप्रसक्तिरिति। ननु हिंसायाश्चेत् सदोषत्वमधिकार्य्यनि-रपेक्ष पूजादिकं बलिमन्तरेण कथं सम्भवेत् तद्यथा मातृका-भेदतन्त्रे:—

"विधिना परमेशानि यदि पूजादिकं चरेत्।
वत्सरान्ते प्रदातव्यो बलिरेकः सुरेश्वरि॥"

पूजाधिकारिणो हिंसाधिकाराद् बहुप्रशंसितवैधहिंसाश्रवणाच्च।

## बलिव्याप्तिनिरूपणम्।

गुरुः।—वत्स, सावधानं श्रूयतां कथयामि ते। आदावेव निरूप्यते पूजाया बले-र्व्याप्तिस्ततो मीमांसिष्यतेऽन्योन्यविषयस्तस्य। ददाति, हिनस्ति, निरूपयतीति बलिर्बलदाने निरूपणे हिंसायां चेति धातुकौमुद्याम्। उपास्यस्य प्रीतिं दातुः पुण्यं वा ददाति प्रीतिकालं निरूपयतीति बलि-रथवा अलिष्टबाहुल्यं हिनस्त्यल्पानिष्टं दत्त्वाऽप्युपास्यस्य प्रीतिकालं निरू-पयतीति बलिः। इत्थं बलेर्गृहीतधात्वर्थोपहारपूजासामग्रीत्या-भिधानिकार्थेन शास्त्रनिवहेन विहितं विधानम्। अतो बलेर्हिंसो-पहारार्थकत्वमेव न हिंसासाध्योपहारार्थकत्वमस्य, परन्तु हिंसासामान्या-भाववदुपहारार्थकत्वमपि, अहिंसाभावप्रतियोगिबलिविधानादेतच्चाग्रे स्फारीभविष्यति। अधुना स्थिरीक्रियते पशुयागे हिंसायाः शास्त्रचोदि-ताया मुख्यत्वं गौणत्वं वेति। मुख्यत्वमाङ्गित्वमिति यावत्। पशुप्रधानो विशिष्टफलोपधायकताविशिष्टपशुघातप्रधानो यज्ञः पशुयज्ञः यथाश्व-मेधो गोमेध इत्यादयः। प्राधान्यञ्च तत्रामाङ्गितत्वात् क्रतोः प्राजा-पत्यत्वाच्च। मुख्यत्वेऽपि पशोः क्रतौ क्वचिद् व्यभिचरति स नाम्नैव यथा

ज्योतिष्टोमोऽग्निष्टोमः । अन्यत्राग्निहोत्रादौ पशोः कल्पान्तर-विधानाद् गौणत्वमप्रधानत्वमङ्गत्वं वा । तदङ्ग—"मुख्यफलाजनकत्वे सति मुख्यफलजनकव्यापारजनकमङ्ग"मिति मीमांसकाः। यथा गोमेधाश्वमेधाग्निष्टोमादिषु, श्रौतकर्म्मादिष्वेव विचार्य्यमेवेद मुख्यत्व गौणत्वं, न तथा पौराणिकतान्त्रिकपूजाकर्म्मसु । अत्रान्यत्व तस्यैतत् पश्चाद् व्याकरिष्यते । पूजाया बलेरुपहारत्वमुतोपचारत्वमित्यादावेवालोच्यते । सविशेषं श्रूयताम् ।

बलिरुपहार इति प्राक् प्रदर्शितमेव । नोपचारस्त्वनभिधानात् "आहरणे उपढौकने नैवेद्ये बलौ" इति शब्दरत्नाकरः । "उपायनमुपग्राह्यमुपहारस्तथोपदेति" अमरः । उपचारस्तु "आराधनाया सेवायामुत्कोचे उपचर्य्यायां पूजाद्रव्ये वस्त्रे शमे" इति शब्दरत्नाकरः । वत्स, नैवेद्यार्थकोपहारस्य सम्भवत्येव क्वचिदप्युपचारत्वम् नोपचारस्योपहारत्व । न स्याद्देवोपहारं विना प्रधानफलहानिः । किन्तु प्रधानफलजनकोपचारेण विना न तत्फलप्राप्तिः केनान्येनापि कदाचिद्, यत उपचर्य्यते सेव्यते पूज्यतेऽनेनेति उपचारस्ततः प्रधानफलजनकद्रव्यस्योपचारत्व प्रकल्पितं शास्त्रकोविदैर्नोपहारत्वम् । पूजासामग्रीणामेकतश्चतुःषष्ठिप्रकाराणां प्रत्येकस्योपचारत्व विहित शास्त्रनिवहेषु । नापेक्षितत्व प्रधानापूर्वफलेन सममुपहारस्य । अत्रोदाह्रियते यद् वत्स, निमन्त्रित श्यामः सादरमभ्यर्थितस्त्वयान्नपानादिभिः सुतर्पितः परां तृप्तिं प्राप्तो न तस्मै किमप्युपहृतमुपायनादिकं स्याद् यदि किं तेन तव कर्त्तव्यताहानिर्वा तस्यातृप्तिर्वा सम्भवेत् कदाचिदेवेति मन्तव्यम् ? न । प्रदत्तोपहाराज्जायते तस्य निमन्त्रितस्य निमन्त्रणतृप्तिविजातीयतृप्तिर्न सा प्रधानफलैकदेशः परन्तु नास्वीकार्य्यमेव निमन्त्रणाङ्गहानित्वमृतेऽभ्यर्थनादिकन्तस्य निमन्त्रितस्य । यथात्रोपहारो निमन्त्रणव्यापारेऽन्यफलार्थस्तथा पूजादौ बलिरपि । अत्र श्यामप्रीतिरूपमुख्यफलजनकत्व यथा नास्त्यादरादेः प्रत्येकं किन्तु मुख्यफलजनकव्यापारजनकत्वमतोऽङ्गत्वमेव तस्य, न तथा बलेः पूजाया तस्मादन्यत्वमङ्गविजातीयत्व, तस्य बलिसामान्याभाववत् पूजनविधानादेतच्च प्रदर्शयिष्यते पश्चात् ।

शिष्यः।—गुरो, सम्यगधिगत बलेरुपहारत्व नोपचारत्वं परन्तु पूजाद्रव्यशब्देन नैवेद्यमप्यवगम्यत एव । अत उपहारत्वेऽपि तस्योपचारत्व कल्पनीयम् ?

गुरुः।—बाढम् । प्रागुक्तमेवैतत् तस्योपचारत्व कादाचित्कमेव । तथाप्युपचारमा-

